# THE COMMENTARY OF ŚRĪ ĀTMĀNANDA

ON THE

# "ASYA VĀMASYA" HYMN

OF

# THE ṚGVEDA I. 164.

EDITED FOR THE FIRST TIME

BY

PREMANIDHI ŚĀSTRĪ.

---

REPRINTED FROM THE
ORIENTAL COLLEGE MAGAZINE,
*August, 1932.*

---

PUBLISHED BY

MOTI LAL BANARSI DAS,
THE PUNJAB SANSKRIT BOOK DEPOT,
Said Mittha, LAHORE.

श्रीमदात्मानन्दविरचितम्

ऋग्वेदे

# "अस्य वामस्य"-सूक्तस्य

( १. १६४. )

भाष्यम्

प्रेमनिधिशास्त्रिणा

सम्पादितम्

'ओरयण्टल कालिज मैगज़ीन अगस्त १९३२' इति पत्रिकायाः पुनर्मुद्रितम्

———

मोतीलाल बनारसीदास, पंजाब संस्कृत पुस्तकालय, सैद मिट्ठा बाज़ार,

लाहौर, इत्येतेन प्रकाशितम् ।

## प्रास्ताविकम् ।

अयि सद्विद्यामृतपानपूतमानसाः, वैदिकसाहित्यसौहित्यपरिष्कृतशेमुषीका विद्वांसः । को नु नाम परमार्थमार्गगवेषणपरः परमानन्दलाभलिप्सु र्नाद्रियते नवं नवमिव दृष्टिपथं गतं पूर्वर्षिमहर्षिप्रोक्तप्रमाणोपगुम्फितं सद्भावभूषितं वेदभाष्यम् । तत्रापि पूर्वाचार्यैरूरीकृताध्यात्मपरा निगमव्याख्या तु प्रायेण विदुषां हृदयानि प्रीणाति, भवति च सविशेषमादरास्पदं विदुषां संसदि ।

## सम्पादनसामग्री

अस्यास्यवामीयभाष्यस्य कोशा भारते वर्षे प्रायेण विरला एव क्वचिदवतरन्ति दृक्पथमिति कोशद्वयमेवास्माभिरुपालाभि । एकश्च पञ्चनदीयविश्वविद्यालयस्य पुस्तकालयतोऽपरश्च बडोदास्थराजकीयपुस्तकालयतः । तत्र बडोदास्थपुस्तकालयतो लब्धस्य कोशस्य पाठो बाहुल्येन परिशुद्धोऽनुसरणीयश्च । अतस्तमेवैतस्य संशोधनाधारं विधाय संपादितं संशोधितञ्चैतन्मयेति ।

## व्याख्याशैली

आचार्येणैतद्भाष्यमध्यात्मपक्षमधिकृत्यैव विहितम् । अयं हि सर्वं सूक्तमाध्यात्मिकार्थपरमेव विवृण्वन्नधियज्ञाधिदैवतविषयं स्कन्दभास्कराद्याचार्याणां व्याख्यानं किञ्चिदधिक्षिपतीवेति प्रतीयते । उक्तञ्चाचार्येण स्वभाष्यारम्भ एव । " स्कन्दभास्करादिभिः शौनकश्च, वेदमित्रश्च, बृहद्देवताकारश्चानुक्रमणिकाकारश्च, विष्णुधर्मोत्तरश्चानादृत्य सूक्तव्याख्या कृता, वयं त्वध्यात्ममेव व्याख्यास्यामः इति । एतेन स्कन्दभास्कराद्याचार्याणां भाष्यमत्र शौनकविष्णुधर्मोत्तरादिसम्प्रदायविरुद्धमेवेति सूच्यते । अत एवाचार्येण स्वीये भाष्यारम्भे शौनकीयानुक्रमणिकोद्धृत्याध्यात्मिकार्थबोधनपरा स्वयं व्याख्यायि ।

## भाष्यकृतः समयादिनिर्णयः ।

अस्य भाष्यस्य रचयिता श्रीमदात्मानन्दाचार्यः क कदा चाभूदिति नाद्यु-नापि कस्यचित्सुविदितमिति तद्विषयेऽपि किञ्चिद्विचार्यते ।

ऋग्वेदीयास्यवामीयसूक्तस्य भाष्यकृच्छ्रीमदात्मानन्दः सर्वप्रथमं मोक्षमू-लरभट्टेन स्वीये 'संस्कृतसाहित्येतिहासे' स्मृतः परिचायितश्च । स च परिचयः केवलं दिङ्मात्रमासीत् । तन्मते चात्मानन्दस्य कालः सायणाचार्यत ईषदेव प्राक् । यत आत्मानन्दः स्वीये भाष्ये स्कन्दोद्गीथभाष्कराद्याचार्यांस्तत्तन्नाम्ना संस्मरन्नपि न क्वापि स्मरति सायणाचार्यम् इति ।

यद्यपि भाष्यकृता स्वीयेऽस्यवामीयसूक्तभाष्ये स्कन्दोद्गीथ-भास्कर-शौनक—वेदमित्र—बृहद्देवताकारानुक्रमणिकाकार—विष्णुधर्मोत्तर—निरुक्त—भगवद्गीता—महाभारत--पुराण--स्मृति--पदकार—केशवाचार्य--वेदान्त्युपनिषद्-विष्णुपुराण-निघण्टु--सम्प्रदायज्ञ-योगयाज्ञवल्क्य--वृद्धशौनक-शाकपूणि-पञ्चरात्र, सर्वज्ञगदाधर-भट्टाचार्य( कुमारिल )-चन्द्रिकाकार-टिप्पणकार--पैङ्गिरहस्य-भार-द्वाजसूत्र-भोजवार्तिक-द्राविडस्वामि-वाचस्पति-महायोगशास्त्र-योगमित्र--वामन [ वेदान्तग्रन्थकार ]-वृत्तिकार--बह्वृचारण्यक--रत्नशास्त्र--भोजनिघण्टु-नारदीय-पुराणाद्यनेके ग्रन्था ग्रन्थकाराश्चास्मारि' परमत्र वयं विज्ञानेश्वरचन्द्रिकाकारा-नधिकृत्यैव भाष्कृतः कालादिविषये किञ्चिन्निर्णयामः । चन्द्रिकाकारो देवणभट्टः, स एव हि 'आह्निककाण्ड'स्यापि रचयिता । काणे इत्युपाह्वस्य श्रीपाण्डुरङ्गवाम-नस्य मतेन विज्ञानेश्वरस्य कालः विक्रम संवत् ११२७ तः ११५७ पर्यन्तः । स्मृ-तिचन्द्रिकारचनाकालस्तु खिस्तस्य त्रयोदश्याः शताब्द्याः प्रथमश्चरणः, अतश्च तन्नामोद्धरणेनात्मानन्दस्य कालो विक्रम संवत् १५७५ तोर्वागेवेति निश्चीयते परं सायणतस्तु पूर्व एव । तद्भाष्ये तन्नामादर्शनात् । अतश्चात्मानन्दस्य भाष्य-कालो विक्रमस्य चतुर्दशी शताब्दीति निर्भ्रान्तो विचारः स्यात् ।

आत्मानन्दस्य ज्येष्ठभ्राता लक्ष्मीधराचार्यः कल्पतरोर्निर्मात्रा लक्ष्मीधराचार्येण भिन्न एव । यत आत्मानन्दस्य पितुर्नाम विष्णुप्रकाश इति स्वयमेव तेन स्वीये-ऽस्यवामीयभाष्येऽङ्कितमित्यलं पल्लवितेन ॥

॥ इति ॥

ओं तत्सत् ।

# अथास्यवामीयभाष्यम् ।

अस्य वामस्येति द्विपञ्चाशन्मन्त्रात्मकमिदं सूक्तम् । दैर्घतमसम् । आत्म-दैवतम् ।

यद्यपीह स्कन्दभाष्यादिपूद्गीथभास्करादिभिः शौनकश्च, वेदमित्रश्च, बृहद्देवताकारश्च, अनुक्रमणिकाकारश्च, विष्णुधर्मोत्तरश्चानादृत्य सूक्तव्याख्या कृता तथापि वयमत्र, स्कन्दादिव्याख्या अधियज्ञविषया एव क्वचित्तु निरुक्तानुसारादधिदैवतविषया एवेति निश्चित्य क्वचिदध्यात्मविषयां शौनकादिरीतिमाश्रित्याध्यात्मं व्याख्यास्यामः । अत्र शौनकादिमतस्य संग्रहीतुर्वररुचेरनुक्रमणिका—

अस्य द्विपञ्चाशदल्पस्तवं त्वेतत् । (ऋ० सर्वा० १ ।१६४ ॥)

अल्पस्य सूक्ष्मस्य ब्रह्मणः प्रतिपादनमत्रेत्यर्थः । अपर आह । अल्पिकाया देवतायाः स्तुतिरत्रेति । देवताया एवाल्पैः पदैः स्तवोऽत्रेत्यन्य आह । तदुभयमपि वेदमित्रो निषेधति ।

न देवताल्पिका काचिदन्यत्रापि पदाल्पता ।
उपेन्द्र तव वीर्ये च तन्नो मित्रोऽल्पिका भवेत् ॥ इति ॥

संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण । (ऋ० सर्वा० १ । १६४ ॥)

संशयोत्थापनमाशङ्क्योत्तरमत्र प्रायेण । प्रश्नाश्चात्र क्वचिद् दृश्यन्ते । तेषां प्रतिवचनानि चात्र प्रायेण । तथा चायमर्थः । यद्यपि सूक्तान्तरेष्वपि संशयोत्थापनादित्रिकमस्ति तथाप्यत्र सूक्ते संशयोत्थापनादित्रिकं प्रायेण बाहुल्येनास्ति । संशयोत्थापनमाशङ्क्योत्तरं शास्त्रान्तरनिराकरणमन्याविषयत्वकथनं वा ॥

ज्ञानमोक्षाक्षरप्रशंसा च । ( ऋ० सर्वा० १ । १६४ ॥ )

ज्ञायते येन तज्ज्ञानं ज्ञानसाधनम् । मोक्षो ऽनिरवद्यं परमात्मरूपम् । अक्षरस्य जीवात्मस्वरूपस्याक्षरमित्याख्या । तेषां प्रशंसा प्रतिपादनम् । यद्वा । ज्ञानेन मोक्षः अक्षरवत्प्रतिपादनम् । अक्षरशब्देन ब्रह्मणो जीवस्याविद्यायाश्चाभिधानमुक्तम् । अक्षते व्याप्नोतीत्यक्षरं ब्रह्म । अश्नातीति जीवात्मा । न क्षरतीत्यविद्या । ज्ञानादृते न क्षरति यतः । एवञ्च देवता परमात्मैव सूक्तस्येत्युक्तं भवति छन्दस्त्रिष्टुप् ॥

पञ्चपादं साकंजानां यद्वायत्रेऽयं स शिङ्क्ते
सप्तार्धगर्भा गौरीरिति जगत्यः षट् ।
एतदन्तं तु वैश्वदेवम् । (ऋ० सर्वा० १ । १६४ ॥)

गौरीर्मिमायेतिऋगन्तं वैश्वदेवम् । तु शब्दोऽत्र पारिभाषिकः, किन्तु

विशेषद्योती । ऋषिदैवतच्छन्दसामुपरिश्रूयमाणत्वात् । एतदन्तमेव वैश्वदेव-मिति ॥ तदुक्तम्—

अस्य वामस्य पलितस्य होतुरिति वैश्वदेवं
बहुरूपं बहुरूपं वा एतदहरेतस्याह्नो रूपम् । (ऐ० आ० १।५।३।८॥)
गौरीर्मिमाय सलिलानि तक्षतीत्येतदन्तमिति । (ऐ०आ०९ ।१ ।३ ।८ ॥)

वैश्वदेवशास्त्रे विनियुक्तत्वादेव वैश्वदेवं न तु विश्वेदेवा देवताः । तल्लिङ्गादर्शनात् । बभ्रुरेक इतिवत् । ज्ञानमोक्षाक्षरैर्नानाधातुत्वेन वैश्वदेवमङ्गीकुर्मः किन्तु तस्याः समुद्रा इत्याद्यपि वैश्वदेवं स्यात्, तस्माद्विनियोजको वेदो नः प्रमाणम् ॥

तस्याः समुद्रा इति वाचः समुद्राः । (ऋ० सर्वा० १ । १६४ ॥)

तस्याः समुद्रा इति मन्त्रे समुद्रा इति वाच इत्यर्थः ॥

आपो ऽक्षरम् । (ऋ० सर्वा० १ । १६४ ॥)

'तत, इति मन्त्रे ततः क्षरत्यक्षरमित्यक्षरमाप इत्यर्थः ॥

सा प्रस्तारपङ्क्तिः । (ऋ० सर्वा० १ । १६४ ॥)

'तत, इति ऋगेव ॥

शकमयमिति शकधूमः । (ऋ० सर्वा० १ । १६४ ॥)

अत्र शकमयधूमो देवता । मन्त्रव्याख्यावसरे विशेषं वक्ष्यामः ॥

उक्षाणं पृश्निमिति सोमः । (ऋ० सर्वा० १ । १६४ ॥)

अत्र सोमो देवता ॥

त्रयः केशिन इत्यग्निः सूर्यो वायुश्च
केशिनः चत्वारि वाग्वाचः । (ऋ० सर्वा० १ । १६४ ॥)

चत्वारि वागिति मन्त्रे वागिति वाच इत्यर्थः ॥

इन्द्रं मित्रं सौर्यौ । (ऋ० स० १ । १६४ ॥)

द्वौ । सूर्योपस्थाने विनियुक्तत्वात् । यत इन्द्रं मित्रमित्यत्र सूर्यनामापि नोपलभामहे । रात्र्यध्ययननिवृत्यर्थं सौरत्वकथनमनयोः ॥

द्वादशेति । (ऋ० सर्वा० १ । १६४ ॥)

द्वादशप्रधयश्चक्रमेकमित्यत्र
संवत्सरसंस्थं कालचक्रवर्णनम् । (ऋ० सर्वा० १ १६४ ॥)
दृश्यत इति शेषः ॥

यस्ते सरस्वत्यै । (ऋ० सर्वा० १ । १६४ ॥)

यस्ते स्तनः शशय इत्येषा ऋक् सरस्वत्यै । सरस्वतीदेवतार्थ ॥

यज्ञेन साध्येभ्यः । (ऋ० सर्वा० १ । १६४ ॥)

' यज्ञेन यज्ञमयजन्त, इत्येषा ऋक् साध्यान् बोधयितुं प्रवृत्ता ॥

परानुष्टुप् । (ऋ० सर्वा० १ । १६४ ॥)

समानमेतदुदकमित्येषा ऋक् अनुष्टुप् ।

सौरी । (ऋ० सर्वा० १ । १६४ ॥)

सूर्योपस्थाने विनियुक्तत्वाद्रात्रौ न पाठ्या । न च सूर्योऽत्र प्रतिपाद्यः । तत्र तन्नाम्नो ऽप्यदर्शनात् ॥

पर्जन्याग्निदेवता वा अन्त्या । ( ऋ० स० १ । १६४ ॥ )

अन्त्या ' दिव्यं सुपर्णमित्येषा ऋक् ।

सरस्वते । (ऋ० सर्वा० १ । १६४ ॥)

सरस्वन्तमाह । सूर्याय वा सूर्यं वाह । सौरत्वं पूर्ववदेव वाच्यम् । सर्वमेतत्सूक्तमध्यात्मपरम् । नात्रान्यार्थता वक्तुं शक्या । अत्र विष्णुधर्मोत्तरार्धे बृहस्पतिः पुष्करो नाम यक्षो दाशरथिं रामं प्रति राजधर्मादिकमुक्त्वा, अथर्वविधानं, सामविधानं, यजुर्विधानमृग्विधानं च समाप्य मोक्षार्थे ऽस्यवामीयं सूक्तमुक्तवान् । तदनुसारेणैतत्सूक्तं विवृणोमि ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।

तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥१॥

भा०—अस्य वामस्येत्यस्यामृचि अस्य प्रत्यक्षादिप्रमाणसन्निहितस्यापरोक्षस्य । वामस्य कुब्जस्य शरीरेण परिच्छिन्नस्य व्यापकस्य वा यो होतोद्गाता विचारकस्तस्य होतुः जागृदवस्थायां नाम्ना विश्वस्य प्रथमस्य भ्रातुर्द्वितीयो भ्राता मध्यमोऽस्ति भवति । मध्ये स्वप्ने भवतीति मध्यमः, नाम्ना तैजसः । अश्नो मेघस्य गिरेर्वा नामैतत् । तैजसो हि मेघसदृशः । निद्रया तिरोहिततेजस्त्वात् । स्वप्नाख्यगन्धर्वनगराधिष्ठातृत्वाच्च गिरिवदाश्चर्यविषयः । तदुक्तम्—

ग्राम्यो विश्वस्तैजसोऽद्रिश्चान्तिमः प्राज्ञ ईरितः ।

तुरीयं श्वेतमत्राहुः सर्वानुस्यूतमद्वयम् ॥ इति ॥

अस्य होतुस्तृतीयो भ्राता सुषुप्तो, नाम्ना प्राज्ञो घृतपृष्ठः घृतौ क्षरितौ लीनौ पृष्ठौ परिभवौ बाह्यप्रदेशसमौ जागरस्वप्नौ यस्मिन् स घृतपृष्ठः प्राज्ञः । 'घृ क्षरणदीप्त्योः'। अत्र विश्वादिषु त्रिषु विश्पतिं विश्व-तैजस-प्राज्ञानां पतिं पातारं स्वचैतन्यदानेन रक्षकम् । तुरीयं सप्तपुत्रम् । सप्त महदादयो जगत्प्रकृतयः पुत्राः

कार्यभूता विकृतयो यस्य स तथा। अपश्यं दृष्टवानस्मि। महामाहात्म्ययोगाद्दीप्त-तमा अपरोक्षं परोक्षञ्च तत्तदात्मैव भूत्वा वक्ति जगदनुग्रहार्थम्। प्रथममस्येति पदमन्तोदात्तम्। "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" (६।१।१७६॥)इति तृतीया विभक्ति-रुदात्ता। द्वितीयमस्येति पदमनुदात्तम्। "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" (२।४।३२॥)इत्यनुदात्तत्वान्नान्तोदात्तं शास्त्रमस्ति। सूक्ते सर्वत्रा व्याख्यानमे-तदुक्तं पुष्करोक्ते कल्पे—

मीमांसमानौ जीवेशौ जागरादौ विचिन्तयेत्।
विश्वोऽहं तैजसोऽहं वै प्राज्ञोऽहं तुर्य एव च॥ इति॥

अध्यात्मविदेवानपेक्ष एवं विचिन्तयेन्नान्य इति पुष्कराभिप्रायः। तत्पूर्व-ग्रन्थालोचनात्॥ १॥

सप्त युञ्जन्ति रथमेकचक्रमेको-अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥२॥

भा० वामस्येत्यनेन परिच्छिन्नस्येत्युक्तम्। केन परिच्छेदः। देहेनेत्याह। तन्मात्राः पञ्च, महदहमौ च द्वौ, एवं सप्त युञ्जन्ति। रथं रथरूपकल्पितं शरीरम्। 'शरीरं रथमेव च, (क० उ० ३।३॥) इति श्रुतेः।

एकचक्रम्, एकः कालः चक्रवद्भ्रामको यस्य तम्। एकः एक एवाहं-कारो ऽश्वस्थानीयो वहति चेष्टयति। सप्तनामा। सर्पयतीति सप्तः, संक्षिपतीति वा। नामा नामयिता स रुद्रश्चेष्टको यस्य। अहङ्कारस्य रुद्रो देवता। फिट्स्वरेण सप्तशब्दोऽन्तोदात्तः। त्रिनाभिः त्रिधा नभति। 'नभ दीप्तौ' इजादिभ्यः?। चक्रम्, एकचक्रमित्यत्र चक्रशब्देन यदुक्तं तत्। त्रिधा हि कालो भिद्यते। प्रकृतेः परः, प्रकृतिसन्निहितः, शुद्धब्रह्मणोऽर्वाचीनः। ईशः प्रकृतिचेष्टकः प्रथमः कालः। क्षणलवात्मा द्वितीयः। सूर्यात्मा तृतीयः। ईदृशं चक्रञ्चास्य रथस्य त्रिधा कालः। चक्रवद्भ्रामकत्वात्। अनर्वमगमयितृ। स्थानान्तरं न गच्छतीत्यगन्तृ, इत्युच्यते। यत्र कालचक्रे इमा इमानि विश्वा सर्वाणि भुवना भुवनानि अध्यधिश्रित्य तस्थुः अविमुच्य तिष्ठन्ति।

तदुक्तं कल्पे--
महदाद्या वहन्त्येतच्छरीरं कालचक्रितम्।
परमध्यान्तभेदेन तं कालं त्रिविधं विदुः॥ २॥

इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः।
सप्त स्वसारो अभि सं नवन्ते यत्र गवां निहिता सप्त नाम ॥३॥

सूक्ष्मदेहमाश्रित्योक्तम् । अथ स्थूलदेहमाश्रित्योच्यते । इमं प्रत्यक्षादिसन्निहितं रथं स्थूलदेहम्, अध्यधिष्ठायाश्रित्य ये तस्थुः । यानि सप्ताङ्गानि वर्तन्ते तैरेव सप्ताङ्गैः सप्तचक्रो देहः । 'चक दीप्तौ प्रतीघाते च' । सप्ताङ्गानि सप्त चक्राणि इष्टप्रवर्तकानि यस्य अनिष्टान्निवर्तकानि इति वा सप्तचक्रस्तं सप्तचक्रम् । सप्त अश्वाः रजस्तमःसहितानि कर्मेन्द्रियाणि वहन्ति गमयन्ति चालयन्ति ।

इन्द्रियाणि हयानाहु विषयांस्तेषु गोचरान् । (कठ०उ० ३।४) इति श्रुतेः ॥

सप्त धर्माधर्मसहितानि ज्ञानेन्द्रियाणि स्वसारो भगिनीस्थानीयानि, इतरेन्द्रियशक्तीनामभ्याभिमुख्येन संनवन्ते प्रवर्तन्ते । 'णु स्तुतौ' । अनेकार्था धातवः । अत्र कर्मव्यतिहारे तु छन्दसि शप् । कुत्रेन्द्रियशक्तिस्तदाह । यत्र विषये गवां रजस्तमःसहितानां कर्मेन्द्रियाणां तथा धर्माधर्मसहितानां ज्ञानेन्द्रियाणां च निहिता नितरां हितानि अनुकूलानि सप्तसंख्याकानि नामा नामानि दैवतानि इन्द्रियदेवताः ।

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।
ज्ञानकर्मेन्द्रियाणां स्युः क्रमाद्देवा इमे दश ॥
ब्रह्मा तु रजसो रुद्रस्तमसः सुकृते हरिः ।
असत्कृते भैरवादिः क्रमाद्देवाश्चतुर्दश ॥

तदुक्तं कल्पे—

सप्तचक्रमिदं देहं वहन्त्यः सप्तकर्मणाम् ।
ज्ञानेन्द्रियाणां सप्तैव देवतास्तु चतुर्दश ॥

एतन्मन्त्रप्रशंसाकरणे ऽप्युक्तम्—

मूर्धोरोजठरं कराङ्घ्रियुगलं सप्तः शरीरं वहत्
कामार्थाश्च रजस्तमांसि गमयन्त्यन्यानि खानि स्फुटम् ।
धर्माधर्मवृतानि सप्त विषयान् संग्राहयन्त्यामृतेः
खानां यत्र सुरैः प्रवृत्तिगमने एवं तनुः स्थूलिका ॥

अस्यायमर्थः—मूर्धादि त्रिकं करावङ्घ्री चेति सप्ताङ्गानि चक्राख्यानि । सप्तः सप्तक इत्येव सप्त वहत् शरीरं गमयन्ति चालयन्ति । खानि कर्मकरणानि कर्मेन्द्रियाणि रजस्तमसीत्येव सप्तैव । तथान्यानि खानि धर्माधर्मसहितानि ज्ञानेन्द्रियाणि पञ्च, एवं सप्त आमृतेर्विषयान् संग्राहयन्ति । यत्र येषु विषयेषु खानि सुरैः इन्द्रियदेवताभिः प्रवृत्तिं प्रापितानि इन्द्रियाणि तान् विषयान् संयोजयन्ति । एवं स्थूलशरीरमुक्तम् । तथा—

प्रवर्तेत निवर्तेत येन तच्चक्रमुच्यते ।

भ्रामकं पूर्वमन्त्रोक्तं चक्रं यद्भ्रमयत्यपि ॥ ३ ॥ इति ॥

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति ।

भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुप गात्प्रष्टुमेतत् ॥४॥

देहात्मपक्षनिरासोऽत्र । कः पुमान् प्रथमं कारणमात्मानं, जायमानदेहं चक्रमिति ददर्श पश्यति मन्यते । व्याघातात् । अस्थन्वन्तं सावयवम् । यद्यस्माद-नस्था अस्थिरहितो निरवयवो बिभर्ति धारयेत् । अन्यथानवस्था स्यात् । यो निर-वयव आत्मा भूम्याः पार्थिवादिधातो देहस्य असुः क्षेमा प्रवर्तकः क्व स्वित् स्या-देव । अतश्च असृक् तद्वान् देहः क्व स्वित् दर्शने आत्मा स्यात् । स्विच्छब्दोऽसं-भावनायाम् । नन्वमुमर्थमेतैरेव त्रिभिर्हेतुभिः सर्वे कथं न विदुः पुरुषाः । शृणु । कः पुरुषः उपगादुपगच्छति विद्वांसं जानन्तमेतदात्मस्वरूपं प्रष्टुम् ।

तदुक्तं कल्पे—

कारणत्वादनन्तत्वाच्चेष्टकत्वाच्च भिद्यते ।

आत्मा नायं सुदुर्बोधः कार्यांशप्रेर्यदेहतः । इति ॥४॥

पाकः पृच्छामि मनसाविजानन् देवानामेना निहिता पदानि ।

वत्से बष्कयेऽधि सप्ततन्तून् वि तत्निरे कवय ओतवा उ ॥५॥

प्रश्नप्रकारे मन्त्रः । पाकः पक्कोऽबालः प्रशस्तः पृच्छामि । संकल्पविकल्प-वता मनसा हेतुना अविजानन् सामान्येन जानन्नपि विशेषेण न जानन् । निर्विशेषे आत्मनि किं ज्ञातव्यम् । देवानामिति वेदानाम् । वर्णव्यत्ययात् । एनानि निहिता ब्रह्मविष्णुरुद्राणां प्रसिद्धानि पदानि 'अस्य वामस्य पलितस्य', ( १६४ । १ ॥ ) 'विश्पतिं सप्तपुत्रम्' ( १६४ । १ ॥ ) इत्यत्रार्थतः प्रसिद्धानि निहिता निगूढार्थानि लक्षणया प्रवृत्तानि 'तत्त्वमसि' ( छां० उ० ६।८।७ ) इत्यादीनि पृच्छामीत्यन्वयः । वत्से पुत्रत्वमापन्ने । बष्कये । बष्किर्हि गत्यर्थः । सर्वे गत्यर्था ज्ञानार्थाः । एवं पृष्टा गुरवो यद्ब्रूयुस्तदाह । अध्यधिकान्निष्कामान् काम्यनिषिद्धेतरान्, सप्ततन्तून् सप्तधातूत्पन्नान् तन्तून् विततान् विस्तृतान् यज्ञान् वितत्निरे विशेषेण तन्वन्ति कवयो गुरवः । ओतवै अवितुं ज्ञापयितुं उ अभिमतं वस्तु तत्निरे तन्वते । छन्दसि-लिटि "तनिपत्योश्छन्दसि" ( ६ । ४ । ९९ ॥ ) इत्युपधालोपः । अवतेः संप्रसा-रणम् । 'वेञ् तन्तुसंताने' "तवै चान्तश्च युगपत्" ( ६ । २ । ५१ ॥ ) इत्याद्यन्तो-

दात्तौ । "तुमर्थे सेसेनसे" (३।४।९॥) इत्यादिना तवैप्रत्ययः । पूर्वमन्त्रे 'अस्थन्वन्तं यदनस्था" (१६४।४॥) इत्यत्रानो नुट् । "छन्दस्यपि दृश्यते॥ (७।१।७६॥) इत्यञ् ( इत्यनङ् ? ) । अत्र पुष्कर आह—

पृच्छेत् पदानि पुत्रा भो ज्ञानाय गुरवस्तदा ।
ब्रूयुः कर्माणि निष्कामाः कुरुष्वाध्यात्मबुद्धयः ॥
इति ॥ ५ ॥

अचिकित्वान् चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान् ।
वि यस्तस्तम्भ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥६॥

पुनः पृच्छेदित्याह । अचिकित्वान् अजानन् । चिकितुषः सम्यग्जाननः । चित् सम्यक् कवीन् ज्ञापने प्रौढान् पृच्छामि । विद्मने परोक्षज्ञानाय नैव विद्वान् । शास्त्रश्रवणादिना विद्वानिव वर्तमानोऽप्यहं परमार्थतो नैव विद्वान् । योऽहं विशेषेण तस्तम्भ स्तम्भिष्यामि इमानि प्रसिद्धानि कामादीनि षड् रजांसि मलानि रजोगुणकार्याणि वा युष्मत्प्रसादात् । प्रश्नकारणमाह । अजस्य नित्यस्यात्मनोऽत्र रूपे स्वरूपे जगति किं स्विदेकमेव रूपमादरणीयमपि स्विदनेकमेव रूपमादरणीयमिति सोऽहं पृच्छामि । अत्र कल्पः—

अज्ञः पृच्छाम्यहं तज्ज्ञाः सम्यग्बुद्ध्या अपण्डितः ।
एको वानेक आत्मेति योऽहं स्तम्भितषड्रिपुः । इति ॥६॥

इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः ।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥७॥

गुरुलक्षणमत्र । इह ब्रह्मविद्यायां वक्ता य ईमिदमात्मतत्त्वमङ्गासन्दिग्धं वेद जानाति । किं वेद तत्राह । अस्य प्रत्यक्षादिप्रसिद्धस्य वामस्य कुब्जस्य परिच्छिन्नस्य जीवस्य निहितं त्वमिति पदं निहितं लक्षणया प्रवृत्तं, तथा वेः सुपर्णस्य परमात्मनो ब्रह्मणो यत्तदिति पदं लक्षणया प्रवृत्तं वेद स इह वक्तु । स एव गुरुः स्यादित्यर्थः । किञ्चायमाभाणकोऽपि गुरुणा भवित्रा ज्ञेय इत्याह । शीर्ष्णः शिरसः सकाशात् क्षीरं दुह्रते गावोऽस्योक्तस्य पुरुषस्य । "वव्रिमिति रूपम" (नि० ३।७॥) वरणीयम,विचित्ररूपवत् । रूपसहितं रोचनादिरागेण रञ्जितमरञ्जितरागद्वयवियुक्तं कमनीयं माञ्जिष्ठं वस्त्रं वसानाः परिदधाना गाव उदकं पदा पादेनापुः । अन्तर्भा-

वितण्यर्थोऽयम् । पार्थं पाययन्ति बोधयन्ति । अयमाभाणकोऽपि भवित्रा गुरुणा ज्ञेयः। आभाणकार्थवृतिस्तु तस्य जीवस्य शिष्यभावं गतस्य गावो वेदाः क्षीरं सारं ब्रह्मामृतरसं शीर्ष्ण उपनिषद्भागादूर्ध्वस्थानीयाद् दुह्रते दुहन्ति स्पष्टं प्रतिपादयन्ति । कथम्भूताः । वार्त्रिं सत्त्वरजस्तमोभिश्चित्रपटसदृशं त्रिगुणात्मकप्रपञ्चं ब्रह्मव्यतिरिक्तं वस्तु प्रतिपादयन्त्य इव दृश्यमानाः । परमार्थतस्तु सर्वत्र ब्रह्मपरत्वाद्ब्रह्मैव प्रतिपादयन्ति वेदाः । उदकम्, कं सुखमकं दुःखं तस्मादुद्गतं सुखमयं दुःखरहितं शुद्धं ब्रह्म पदैकदेशेनोपनिषद्भागेन स्वांशेन महावाक्येन वापुः पाययन्ति बोधयान्ति । यद्यपि—

सर्वे वेदा यत्पदमामनन्ति ( कठ. उ. २ । १५ ॥ ) इत्यादिश्रुत्या,
वेदैश्च सर्वैरहमेव वेद्यः, ( गी. १५ । १५ ॥ ) इति भगवद्गीतया च,
ब्रह्मात्मविषया वेदाः, इति महाभारतेन च,
तनूषु ते क्रतवत इन्द्र भूरयः (ऋ० १ । ५५ । ८ ॥ ) इति मन्त्रैकदेशेन च
"विष्णौ वेदाः प्रतिष्ठिता" इति पुराणेन च,
हृदयकमलमध्ये दीपवद्वेदसारम्" (  ) इति स्मृत्या च सर्वोऽपि

वेदो ब्रह्मपरः । किञ्च, सगुणेशविषयाणां तत्पदार्थविवेचकत्वात् कर्मविषयाणां वेदानां त्वंपदार्थविवेचकत्वाद्ब्रह्मात्मैक्यपरवेदापेक्षितपदद्वयार्थप्रतिपादकत्वेनोपनिषदैकवाक्यत्वमेव, तथापि सगुणेशविषयकर्मविषयवेदमार्गेषु न स्पष्टा ब्रह्मधीरुपनिषत्सु स्पष्टा भवतीत्यभिप्रायेणोदकं पदापुरित्युक्तं न किञ्चिदप्यनुपपन्नम् । दुह्रत इति दुहश्छान्दसो लिट्, "बहुलं छन्दसि" (७ । १ । ८ ॥ ) इति रुट् । उदकमित्यत्र "समासस्य" ( ६ । १ । २२३ ॥ ) इत्यन्त उदात्तः । फिट्स्वरश्च । गणेषु चायमन्तोदात्तः पठितः । द्विखण्डताभाव उक्तोत्तरः । अर्थसंदेहाच्च न द्विखण्डता । अत्र कल्पः—

तत्त्वं पदे लक्षणया प्रवृत्ते
योवेद स स्याद्गुरुरात्मबोधे ।
आभाणकज्ञः शिरसो हि गावः
पादेन दुग्धं दुदुहुः सवत्साः, इति ॥७॥

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे ।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥८॥

मायासंबद्धे आक्षेपाशङ्कायामृच्युत्तरम् । नन्वाचार्योपदेशे किं भवति । जीवब्रह्मभेदिकाया मायाया निवृत्तिः । ननु सा माया स्पृष्ट्वा भिनत्त्यस्पृष्ट्वा वा । द्वितीये ऽनवस्था, अतिप्रसङ्गो वा । स्पृष्ट्वा चेत् । कं स्पृशति । जीवं चेदितरेतराश्रयः । परस्पर्शो ऽसंभावितस्तं प्रति चोद्यं कार्यम् । मुखप्रतिमुखभेदके च दर्पणे ऽप्येवं वाच्यम् । अत्राप्यस्पर्शेऽतिप्रसङ्गः । प्रतिबिम्बस्पर्शे ऽन्योन्याश्रयः । असम्भवो बिम्बस्पर्शः । अत्रोत्तरमिदम् । सान्निधिसत्तालक्षणेन सम्बन्धेन मुखं स्पृष्ट्वा प्रतिबिम्बाद्भिनत्ति दर्पणस्तर्हि प्रकृते ऽप्येवमित्यत्रोच्यते । माता सृष्टेर्जननी माया पितरमीशमृते विना संस्पृशत्यपि आ बभाज ईषद्भजति । सन्निधिसत्तालक्षणमिथ्यासम्बन्धमनुभवन्त्यपि धीती । "धेट् पाने" क्तः । अल्पापेक्षित्वधर्मेण छान्दसत्वादसमासेऽपि "क्तादल्पाख्यायाम्" (४ । १ । ५१ ॥) इति ङीष् । अग्र आदौ मनसा कार्येण सङ्गमे सङ्गता बभूव । हि ततः सा च माया बीभत्सुः प्रपञ्चजननद्वारा बन्धनहेतुः । जुगुप्सितसंसारहेतुरित्येके । अभयस्यात्मनो भयजननीत्यन्ये । गर्भरसा, रसः परमात्मा "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" (तैत्ति०उ० १ । ६ । १ ॥) इति श्रुतेः । गर्भो गर्भीकृतः प्रच्छादितो रसो यया सा गर्भरसा । नियतं विद्धं ताडनं तत्त्वज्ञानकृतं यस्याः सा निविद्धा । तत्त्वज्ञाननाश्येत्यर्थः । अनया च नमस्वन्तो नमनवन्तः सङ्कोचवन्तः परिच्छिन्नमात्मानं मन्यमाना जीवा अज्ञानप्रवृत्ता एवोपवाकमप्रधानवाक्यं महावाक्यादितरत्कर्मविबोधकं वाक्यमीयुः प्राप्नुवन्ति । तत्राधिकृतास्ते भवन्तीत्यर्थः । संजग्मे, लिटि "समो गम्यृच्छिभ्याम्" (१ । ३ । २९ ॥) इत्यात्मनेपदम् । "गमहने" (६ । ४ । ९८ ॥) त्युपधालोपः । "हि चे" (८ । १ । ३४ ॥) ति निघाताभावः । कल्पस्तु—

> यद्दर्पणो बिम्बविभेदकः स्यात् ।
> स्पृष्टोज्झितोऽप्येवमियं हि माया ।
> जीवेशभेदं विदधात्यमुष्यां
> लग्नाः क्रियाः का उ गिरः प्रपन्ना ॥ इति ॥८ ॥

युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वन्तः ।
अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥

माया निवर्तते । केन । विद्यया । सा प्रमा न वा । न चेद्व्यर्था प्रमा । सत्या चेद्द्वैतम्, असती वृथा । एवं मुनिप्रश्नस्योत्तरम्—

मायानिवर्तिनी विद्या साप्यसत्या प्रमा न सा ।
न द्वैतं न च सा व्यर्था भौमाद्भौमहतिर्यया ॥

तदत्रोच्यते । युक्ता योगनिरूपिणी चेन्माता जगज्जननी मायापि दक्षिणायाः प्रौढायाः संविद्रूपाया मुक्तेर्बलवत्या वा, उत्साहवत्या वा धुरि धूःस्थानीयान्तःकरणशोधके सत्त्वे आसीद्भवति तिष्ठति । सत्त्वगुणस्था माया विद्या मुक्तिहेतुः । विद्योत्पत्तौ किं भवति तत्राह । अतिष्ठद्वृतिनिवृत्तो भवति गर्भः । कुतः । अन्तर्वृजनीषु बलवतीषु तिसृष्ववस्थास्वन्तः आन्तरः जागरस्थविश्वादान्तरः, स्वप्नस्थतैजसस्तस्मादान्तरः,सुषुप्तौ प्राज्ञस्ततोऽप्यान्तरस्तुरीयः । नास्मादन्य आन्तरोऽस्तीत्यन्तर्गर्भशब्दाभ्यामुक्तः सर्वासर्वान्तरः । आन्तरेभ्यो विश्वतैजसप्राज्ञेभ्य आन्तरस्तुरीयो ऽतिष्ठद्वृतिनिवृत्तो भवति । प्रथमार्द्धे चोक्तार्थहेतुमाह । अनु अमीमेत् । "मी गतौ" अडागमश्छान्दसः । अनुगच्छेदनुसरेदभ्यसेद्वत्सः पुत्रभावमापन्नः शिष्यो गां महावाक्यरूपिणीं वाचम् । अनन्तरश्चापश्यद्विश्वरूप्यं सगुणं ब्रह्म परमेश्वरं त्रिषु योजनेषु योगेषु श्रवणमनननिदिध्यासनात्मकेषु सत्सु स पश्यतीति सूचितम् । युक्ता मातेति सम्बन्धः । विश्वं रूपमस्येति विश्वरूप्यं सगुणं ब्रह्म, तदस्मिन्नस्तीति । "छन्दसीवनिपौ" ( वा० ५ । २ । १२२ ॥ ) इति मत्वर्थे ईप्रत्ययः । "वा छन्दसि" ( ६ । १ । १०६ ॥ ) इति पूर्वसवर्णा ( र्णदीर्घा ? ) भावे "उदात्तस्वरितयोर्यणः स्वरितो ऽनुदात्तस्य" ( ८ । २ । ४ ॥ ) इति स्वरितः । प्रशस्तो विश्वरूपस्तद्वन्तं वा, विश्वानि तानि रूपाणि तद्वन्तं वा । कल्पस्तु—

वाचं समभ्यस्याति चोत्तरेभ्यः
पश्येत्त्रियोगी हृदि चेत्समृद्धः ॥
सात्त्विकमायापि हि मुक्तिहेतुः
मुक्तावतिष्ठत् स तुरीय आत्मा ॥ इति ॥ ९ ॥

तिस्रो मातॄस्त्रीन् पितॄन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम् ॥ १० ॥

अत्र तुर्यः प्रपञ्च्यते । तिस्रो मातॄ लक्ष्मीगौरी-सरस्वती मुख्यत्वेन पितॄन् विष्णुहरब्रह्मणः पुत्रत्वेन बिभ्रद्धारयन् नियमयन्नेकः परमात्मैवोर्ध्वः अवस्थात्रया

त्परतः स्थितस्तुरीयस्तिष्ठति । मुक्तावीमेनं तुरीयं मुक्तमवकृष्य न ग्लपयन्ति अज्ञानेन न पीडयन्ति । तिस्रो मातरस्त्रयश्च पितरस्तुरीयमेकमुपदिशन्तीत्याह । मन्त्रयन्ते गुप्तं भाषन्ते एकान्त उपदिशन्ति दिवो दीप्यमानस्यामुष्य परमात्मनः पृष्ठ उपरि भागे तुरीये स्थितम्, विश्वं जाग्रतं पुरुषं वेत्तीति । अविश्वमिन्वाम्, विश्वमिन्विश्वस्नेहस्तद्रहितां महावाक्यरूपिणीं वाचम् । " ञिमिदा स्नेहने " व्यत्ययेन मिच्छब्दस्य मिन्वा ताम् । अपरे तु " इन्वति व्याप्तिकर्मा " ( निघ २ । १८ ॥ ) । यद्वा " ई प्रीणने " " इवि सेचने " छान्दसो नुम् । पदकारास्तु परभक्तं नुममाहुः । मिन्वन् शब्दः प्रधानवाचीत्यन्ये । अर्थतस्त्वेक एव तिष्ठति । तात्पर्यतो विश्वमेत्यपनयतीति ताम्, तुरीयरूपेणावस्थापयन्तीमित्यर्थः । तुरीये संस्कारकल्पनाकल्पनाभ्यां तुरीयतुरीयातीतयो र्योगिवेदान्तिविप्रतिपत्तिरिति संज्ञाभेदमात्रे विवादः । तदुक्तं केशवाचार्यैः—

आब्रह्म कल्पितं यत्स्यादवस्थात्रय एव तु ।
तुर्यमेव ततो ब्रह्म तुर्यातीतं तु निष्कलम् ॥
अवस्थात्रयतोऽबाह्यं यत्किञ्चित्कल्प्यते यदि ।
तुर्यातीतं परं ब्रह्म तुरीयं सगुणं भवेत् ॥
शङ्करार्योऽपि यत्प्राह शास्त्रे तुर्यं तथागमे ।
तुर्यातीतं ततो ज्ञानं संज्ञामात्रविवादनम् ॥
ज्ञेयापेक्षं न तुर्यं स्याज्ज्ञानापेक्षं तदिष्यते ।
वृत्तिज्ञानं तुरीये यत्तन्निवर्तत एव हि ॥ इति ॥

कल्पस्तु—

मोमागिरो विष्णु-सदाशिवाजान्
बिभ्रद्य एकः स तुरीय एव ।
उद्दिश्य वाचं प्रवदन्ति मुक्त्यै
विश्वोज्झिनीं विश्वविबोधिनीं च ॥ १० ॥

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥ ११ ॥

माता पितरमित्यत्र मन्त्ररूपं सूचितम् । त्रिनाभिचक्रमित्यत्रोक्तं त्रिषु कालेषु मध्यमकालमाह । द्वादशारं द्वादश मासा अरा यस्य तच्छास्त्रान्तरप्र-

सिद्धं जराय जरणाय योग्यं रक्षयितुं शक्यं नहि ववर्ति पुनः पुनर्वर्तते चक्रं कालचक्रम्। ऋतस्य सत्यस्य परमात्मनः सम्बन्धिनीं द्यां द्योतमानां ब्रह्मविद्यां परि ऋते विना वर्जयित्वा वर्तते। ब्रह्मविद्याया अभाव एव कालचक्रप्रभाव इत्यर्थः। आ समन्तात्पुत्रा अवयवा अंशा भो अग्ने अग्रणीर्मिथुनासः अन्योन्यसंघट्टितरूपा मिथुनीभूता इवात्र कालचक्रे रात्रिदिवसरूपाः सप्तशतानि विंशतिश्च तस्थुरातिष्ठन्ति। कल्पस्तु—

स द्वादशात्मा न हि जीव एव
हित्वात्मविद्यां भ्रमतीह कालः।
यो मध्यमोंशस्तु शतानि सप्त
सविंशकानीह दिवा निशाश्च ॥ ११ ॥ इति।

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम् ॥१२॥

अनेन प्रथमः काल उच्यते। तस्य कालस्य मूलप्रकृतिरेव देहः। तस्याः पञ्चावयवाः।

तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुरासीन्महात्मनः ॥ (वि० पु० १।५।५॥)

एते भेदा अन्यैः क्लेशा इत्युक्ताः। "अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः" (योग० २।३॥) इति वेदान्तवादिन आहुः।

प्रतीतिमायामूलाख्या तूलाख्या चेति सा द्विधा।
विक्षेपावृतिभेदेन तूलाख्या च पुनर्द्विधा॥
ईशे त्वावरणं नास्तीत्येवमीशे द्विधैव सा।
त्रिधा जीवे द्विधा देवे एवं पञ्चविधैव सा॥

इत्युपनिषद्वचनात्पञ्च पादा अंशा यस्य तं पञ्चपादं जगतां पितरं द्वादशाकृतिं द्वादशाकारम्। सृष्टिस्थितिसंयमार्थानि चत्वारि चत्वारि रूपाणि सन्त्यस्य। विष्णुपुराणाद्युक्तानि प्रकृतिविधात्रादीनि ब्रह्मप्राणिकर्तृकानि दिवस्तत्त्वज्ञा आहुः। परे अर्धे कतिपये इतरे तत्त्वविदस्तु पुरीषिणमुदकवन्तमब्धिशायिनं नारायणं पञ्चपादादिगुणमाहुः। दिव आहुः परे अर्धे पुरीषिणमित्यस्यान्यपार्थं वदन्ति केचित्। पुरीषशब्देनाविद्यावान्तरापि छाया जीवाख्योच्यते, तद्वन्तं सूत्रा-

त्मकं नारायणं दिवः स्वर्गलोकस्य परे उत्कृष्टे ऽर्धे भागे वैकुण्ठाख्ये लोके ऽस्थानन्तरमिमे प्रसिद्धा अन्य एके आचार्या उपरे अद्रिरित्यादिषु। निघण्ट्वादौ त्रिंशन्मेघनामसु मध्ये एकोनविंशति नामानि पर्वतस्याप्यभिहितानि भवन्ति इति संप्रदायज्ञा आहुः। अपरे कैलासादिके सन्तं विचक्षणं विश्वरूपाक्षं रुद्रं तमाहुः। तथा सप्तचक्रे सप्तदशे महदादिसप्तपरिधौ षडरे षड्ऋतुपरिधौ वर्तमानेन मध्यमेन चराचरादौ ब्रह्माण्डे ऽर्पितमधिकृतं ब्रह्माणं तमाहुः।

शुद्धप्रधानयोर्मध्ये कालो मायांशभाजकः।
शक्तिप्रसारणाकृष्टेर्हेतुर्वाक्याग्निमोचकः।
ब्रह्मविष्णुमहेशादिकारणं तत्प्रचक्षते।
तं विष्णुमेके शंसन्ति रुद्रमेके विधिं परे॥

इति योगयाज्ञवल्क्यश्लोकद्वयम्। कल्पस्तु—

मायाशरीरी प्रथमस्तु कालः
पञ्चांशको द्वादशरूपभिन्नः।
तं सर्वयोनिं प्रवदन्ति विष्णुं
रुद्रं परे ऽमुं चतुरास्यमन्ये॥ १२॥ इति।

पञ्चा॑रे च॒क्रे प॑रि॒व॒र्त॑मा॒ने त॒स्मिन्ना त॑स्थु॒र्भुव॑नानि॒ विश्वा॑।
तस्य॒ नाक्ष॑स्तप्यते॒ भूरि॑भारः स॒नादे॒व न शी॑र्यते॒ सना॑भिः॥ १३॥

एवंविधकालाख्येऽधीशानं लिङ्गदेहमाश्रितः सर्वसंसार इत्युच्यते। पञ्चारे—

द्विधा खानि च तन्मात्राः प्राणा अवयवक्रियाः।
पञ्चारमेवं लिङ्गं स्याच्चक्रं तत्कर्तृचारि च॥

इति वृद्धशौनकः। कर्मेन्द्रियाणि, ज्ञानेन्द्रियाणि, तन्मात्राश्च, प्राणाश्चान्तःकरणानि चेति राशयः। एवं पञ्चावयवा अस्य तत्करोति चक्रम्। कृञः केचित्। लिङ्गशरीरमेकमेव कर्तृ न त्वात्मा। अविवेकादात्मनि कर्तृत्वं प्रतीतम्। यद्वा। चरतीति चक्रम्। रूपसिद्धिरुन्नेया। लिङ्गधारकमेव लोकान्तरसञ्चारित्वमात्मन इत्युक्तं भवति। उक्तञ्च—

देशे कर्तरि चक्रं स्यादायुधे चक्रसंज्ञके।
तैपके च प्रतीघाते कालभ्रामकपक्षिषु॥ इति॥

तस्मिन् पञ्चारे चक्रे परिवर्तमाने लोकान्तरं वाञ्छति सति तस्मिन् परोक्षे

आतस्थुः आधारीकृत्य तिष्ठन्ति । विश्वा सर्वाणि भुवनानि स्थूलशरीराणि तस्य च भावविकारा इति । तस्य चक्राख्यस्य लिङ्गस्याक्षः भ्रामक आधारः प्रथमः कालः । शुद्ध आत्मा प्रधानश्चेत्येके । न तप्यते न भ्राम्यति न कदाचिदपि नश्यति । तदुक्तं योगग्रन्थे—

शुद्धः कालः प्रधानश्च त्रीणि नित्यानि जङ्गमम् ।
स्थावरश्च न नित्ये स्तः प्रपञ्चो भेदपञ्चकः ॥ इति ॥

ततो भूरिभारो भूरीणां भर्ता । आधारनाशे सर्वशून्यता स्यादित्यर्थः । किञ्च सनात्सर्वदैव सनाभिश्चक्रस्य लिङ्गस्य नाभावेव वर्तमानोऽपि जीवात्मा न शीर्यते न नश्यति । परमार्थतो न देहत्रयधर्मेण युज्यते । जीवात्मनाशे कृतनाशो-कृतनाशाभ्यागमप्रसङ्गः । कल्पस्तु—

पञ्चारके कर्तरि लिङ्गदेहे
देहः स्थवीयान् भ्रमति स्वधर्मैः ।
कालो न नश्येदिह सर्वधारी
जीवोऽपि नो नश्यति देहधर्मैः ॥

प्रशंसायां कः ।

प्राणास्तन्मात्रकाः खानि द्विविधानि मनोगणः ।
एवं पञ्चारकं कर्तृ लिङ्गं तद्धारि तत्स्मृतम् ॥ इति ॥

तद्धार्माञ्जीव आत्मन्यध्य(स्य?)ति स्थूलदेहादिधर्मांश्चेति वृथा संसारी ॥१३॥

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।
सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥१४॥

अनेनान्यदपि जगच्चक्रमस्तीति प्रासङ्गिकं वदन् वेदः सर्वमुक्तिपक्षं निराचष्टे । चक्रं जगच्चक्रम्, “ भ्रमतीति वा चरतीति वा चक्रमिति शाकपूणिः । पुनः पुनरुत्पत्त्यादिधर्मैर्युज्यमानमित्यर्थः । कथं भूतं जगच्चक्रम् । सनेमि । नेमिशब्दोऽर्द्धवाची । इह जगति प्रकृतिः पुरुषश्चार्द्धे विद्यते । तदंशत्वेन जडाजडप्रपञ्चौ नेमिनौ ताभ्यां सहितं कृत्स्नं जगत्सनेमि । नेमिभि र्नेतृभिः परिच्छिन्नैः सङ्कुचद्भिर्जीवैः सह वर्तमानं जगदित्यर्थः । अन्ये त्वाहू रथनेमिरिव जडप्रपञ्चस्योपरि स्थितश्चेतनप्रपञ्चो नेमिस्तेन युक्तं जगच्चक्रमजरमनश्वरम् । आत्मज्ञानासद्भाव इति शेषः । अनेन जगच्चक्रस्य प्रवाहनित्यतोक्ता । वि वावृते विवर्तते । विवर्तोऽयं

प्रपञ्चो न परिणाम इत्यर्थः । विवर्तनिवृत्तिहेतुं कथयति । उत्तानायामूर्ध्वब्रह्मविद्यायाम् । उदूर्ध्वमात्मानं तनोतीत्युत्ताना ब्रह्मविद्या । निमित्तसप्तम्येषा । अविद्यानिवर्तकब्रह्मविद्योत्पत्त्यर्थमित्यर्थः । आत्मानुसन्धानसिद्ध्यर्थं दशसंख्याका युक्ता योगा वहन्ति निर्वहन्त्यनुवर्तन्ते । निर्वहणीयानुवर्तनीयेत्यर्थः ।

श्रवणं मननं सिद्धि र्यमो नियम आसनम् ।
प्राणायामः प्रतिक्षेपो धारणश्च समाधयः ।
दश योगा इमे ब्रह्मविद्याया हेतवः स्मृताः ॥ इति ॥
भक्तिरेकैव शक्तेति परे प्राहु र्मनीषिणः ॥

इति पञ्चरात्रे । तदा च सूर्यस्य परमात्मनश्चक्षु र्ज्ञापकं ज्ञानमेत्यागच्छति ; तत्पूर्वं संशयविपर्ययासम्भावनामलेनावृतमाच्छादितमनुद्भूतमासीत्तस्मिंश्चक्षुषि ज्ञापके ज्ञानेऽर्पितानि विलीनानि भवन्ति भुवनानि जगन्ति विश्वा सर्वाणि ।

कल्पस्तु—

नित्यः प्रवाहेण जगद्विवर्तस्
तं धीर्निहन्याद्दशयोगजन्या ।
स्वीया मतिः स्याद्रजसावृता या ।
प्रागत्र सर्वं भ्रमतामुपैति ॥१४॥ इति ॥

**साकञ्जानां॑ स॒प्तथ॑माहुरेक॒जं ष॑ळि॒द्यमा॒ ऋष॑यो देव॒जा इति॑ ।**
**तेषा॑मि॒ष्टानि॒ विहि॑तानि॒ धाम॒शः स्था॒त्रे रे॑जन्ते॒ विकृ॑तानि रूप॒शः ॥१५॥**

पञ्चारे इत्यत्र लिङ्गं वक्तुं प्रसक्तम् । सनेमीत्यत्रानुप्रसक्तं स्थूलशरीरं विविच्योच्यत इति लिङ्गमाह्नुः । साकञ्जानामिति, साकं देहेन्द्रियादिभिः सार्धं जायमानमिवानं ब्रह्म यस्मिन् (तम् ?) । नेदं षष्ठीबहुवचनान्तं पदम्* । बहुव्रीहौ स्वरानुपपत्तिरिति चेत् "परादिश्छन्दसि बहुलम्" (६ । २ । १९९ ॥) इति सूत्रे

* प—पुस्तके चात्रस्थाने 'इतीदं षष्ठीबहुवचनान्तं पदम्' इत्यस्ति पाठः । स चापपाठः । यत आचार्येणैतद्भाष्यं विष्णुधर्मोत्तरस्थं पुष्कराभिप्रायमाश्रित्यैव विहितम् । तत्र च 'साकञ्जनं सप्तथमेकजञ्चेति' द्वितीयान्तमेव पठ्यते । अत आचार्येणापि साकञ्जानामिति पदं द्वितीयान्तमेव व्याख्यातम् । अत एव हि स्वं मतं पुष्कराभिप्रायञ्च द्रढयितुम्, 'नेदं षष्ठीबहुवचनान्तं पदमित्युक्तम् । अयमेव च पाठो वक्ष्यमाणेन 'बहुव्रीहौ स्वरानुपपत्तिरिति चेत्' इत्यादिना ग्रन्थेन संगच्छते । अन्यैराचार्यैः सायणप्रभृतिभिश्चैनत्षष्ठ्यन्तमेव व्याख्यातमिति विज्ञैः स्वयमूह्यं तथ्यम् ।

स्वरस्य व्यत्ययं सर्वत्र छन्दसि स्मरन्ति । तत्पक्षे ऽर्थो दुर्योज्यः । सप्तथम, 'पथ-गतौ' पलोपश्छान्दसः । सप्तापि लोकान् पथति गच्छतीति सप्तथम् । केचिदत्र सप्तशब्दात् पूरणार्थे "थट् च च्छन्दसि" ( ५।२। ५०॥ ) इत्याहुस्तत्र स्वरार्थावनुपपन्नौ स्याताम् । एकजं, कारणशरीरात्परं लिङ्गं तु तेनैव जायत इत्येकजम् । द्वाभ्यां जायत इति द्विजं स्थूलशरीरम् । अथ लिङ्गदेहावयवानाह । षळित् षडेव, यमाः ज्ञानकर्मेन्द्रियरूपेण युगलरूपाः शब्दाद्या इन्द्रियार्थांश्च । तथाहि । आकाशजं श्रोत्रजातं वाक्च, वायुजं त्वक्पाणी, तेजोजं चक्षुः पादम्, अब्जं रसनोपस्थम् , भूजं घ्राणपायू, उभयेन्द्रियात्मकमनेकभूतजं मन एवमेकादशेन्द्रियाणि भवन्त्युक्तानि । ऋषयः प्राणाः " प्राणा वाव ऋषयः " ( cf. श०ब्रा० ६ १।१।१॥) इति श्रुतेः ।

अहं महान् प्रधानश्च देवत्रयमुदाहृतम् ।
जा इत्यपत्यनामोक्तिस्तन्मात्राः पञ्च देवजाः ॥

इति प्रशंसायामुक्तम् । तेषां यमादीनां लिङ्गावयवानाम् । इष्टानि " इषु-गतौ ", " इषु इच्छायाम् ", " इष आभीक्ष्ण्ये ", इत्यधिकरणे निष्ठा, " आधिकरणवाचिनश्च " ( २ । ३ । ६८ ॥ ) इति षष्ठी । एषणस्थानानि विषयरूपाणि गन्धादीनि विहितानि विधिप्रतिपादितानि चेत्, धामशः धामनि धामनि स्वर्गादिके स्थाने स्थाने वैदिके ज्ञाने ज्ञाने वा रेजन्ते उपयुज्यन्ते । स्थात्रे स्थायिने स्थिरं स्थातारमात्मानं मोचयितुम्, " क्रियार्थोपपदस्य च कर्मणि स्थानिनः " ( २ । ३ । १४ ॥ ) इति चतुर्थी । तानि चेद्विकृतानि काम्यानि वा निषिद्धानि वा । रूपशो रूपं रूपमनेकदेहग्रहणमित्यर्थः । रेजन्ते उपयुज्यन्ते स्थातारमात्मानं बद्धुम् । कल्पस्तु—

यत्पञ्चविंशात्मकमस्ति लिङ्गम्
सार्द्धञ्जनं सप्तथमेकजञ्च ।
यो द्वादशस्तद्विषयाश्रितश्चेत्
तुर्यं पदं नो यदि तद्विरुद्धम् ॥ १५ ॥

स्त्रियः स॒तीस्ताँ उ॑ मे पुं॒स आ॑हुः पश्य॑दक्ष॒ण्वान्न वि चे॑तद॒न्धः ।
क॒विर्यः पु॒त्रः स ई॒मा चि॑के॒त यस्ता वि॒जाना॒त् स पि॒तुष्पि॒ता स॑त् ॥१६॥

पूर्वजन्मनि सिद्धानां स्त्रीणामन्धादीनाञ्चात्राधिकार उच्यते । उकारोऽत्र

पुरणार्थः। अयमर्थः कुतो ज्ञेयः। गुरोश्चेत्। स हि को गुरुरिह ब्रवीतु इमं मन्त्रोक्तं गुरुलक्षणं पुत्रेष्वभिचारितम्। इत्यत्रोच्यते। ननु स्त्रीणां नात्राधिकारः कथम्—

स्त्रीणां शूद्रान्धपङ्गूनां बधिरा पतिताश्च ये।
क्लीवानां नैव काणानां वेदविद्याधिकारिता॥

इति वृद्धमनुस्मरणात्। अत्र श्रुत्योत्तरमुच्यते। उ अपि मे मम ब्रह्मवित्त्वेन परमात्मनः सतीः सम्बन्धिनीरात्मविद्याप्रवणाः स्त्रियोऽपि तानत्यन्तोत्कृष्टान् पुरुषानाहुः। लौकिकं स्त्रीत्वं ब्रह्मविद्याविषये आतिदेशिकेन पुंस्त्वेन श्रौतेन बाध्यतेऽतः सा स्मृतिर्ब्रह्मविद्येतरविषया एव।

गोधादियोषितां स्त्रीत्वे ऽप्यस्ति ब्रह्मणि भागिता।
रुक्मिणीदेवहूतीलादेवक्यो ब्रह्मवित्तमाः॥

इति ममैव ज्येष्ठभ्रात्रा लक्ष्मीधराचार्येणोक्तम्। उक्तश्च शङ्खेन—

नोपनीतो नैव ब्रह्मविद्यां व्याहरते शिशुः।
योषितो ऽपि न तद्ब्रुयुर्विना तु ब्रह्मवादिनीः॥

इति। चन्द्रिकाकारो ऽप्याह्निक एवमेवोक्तवान् "तद्ब्रह्मवादिनीव्यतिरिक्तविषयम्" इत्यादिना ग्रन्थेन। विज्ञानेश्वरेणापि प्रव्रजितागमने प्रायश्चित्तातिशयं ब्रुवता प्रव्रजितानां स्त्रीणामधिकारः सूचितः। प्रव्रज्यायास्तु ब्रह्मविद्या माभूदिति विरुद्धं वचनमस्ति चात्रैतिह्यम्। श्रीशङ्कराचार्यः स्वमात्रे ब्रह्मोपदिष्टवान्, तदर्थमात्मबोधाख्यो ग्रन्थश्च विरचितः।

न च "स्त्रियो नोपदेश्या." इत्यस्ति श्रुतिः। श्रवणनिषेधाभावान्मुमुक्षादिदशासंभवाच्च। तदुक्तम्—

यथाधिकारः श्रौतेषु योषितां कर्मसु श्रुतः।
एवमेवानुमन्यस्व ब्रह्मणि ब्रह्मवादिताम्॥

इति यमस्मृतिः। तस्मात् स्त्रीणामप्यस्ति ब्रह्मविद्यायामधिकारः। एवं जात्यन्धस्यापीत्याह। पश्यत् पश्यति चेद् ब्रह्म अक्षण्वान् चक्षुष्मानेवासौ। ब्रह्मविद्यायां जात्यन्धनियमनिर्बन्धो नास्तीत्यर्थः। एतमेवार्थं व्यतिरेकेणाह। न विचे तद् ब्रह्मविद्यां न वेत्ति चेदन्ध एवासौ। अत एवात्रेदं कैश्चिदुक्तम्।

स्त्रीणां यत्र स्मृतौ ब्रह्मविद्यायाः प्रतिषेधनम्।
दुष्टं तत्स्मरणं यद्वा मन्त्रादिविषयो भवेत्॥

इति। एवं चिकित्वानित्यत्रोक्तं शिष्यलक्षणं स्त्र्यादिष्वभिचरितमित्युक्तम्।

गुरौ लभ्ये सति स्त्रीणामप्युपदेश्यत्वात्। अथो इह ब्रवीतु मन्त्रोक्तं गुरुलक्षणं पुत्रेष्वभिचरितमित्यत्रोच्यते—

पितुः पुत्रो गुरुर्यत्र पत्युर्भार्या गुरुस्तथा।
आचार्यस्य गुरुश्छात्रस्तत्र धर्मः प्रणश्यति॥

इति विरोधो दृश्यत इति चेन्न। एषापि निषेधस्मृतिसदृशी नोपेया, अथवा मन्त्रादिविषया चेति, न ब्रह्मविद्याविषया। कविस्तत्त्वज्ञो यः पुत्रः स इह ईमिदमात्मतत्त्वमाचिकेताज्ञापयति इति स गुरुः स्यादेव। ज्ञापको हि गुरुः। ज्ञानेनैव ज्ञापयति। पुत्रत्वात् पितरं प्रत्यनुपदेष्टृत्वमिति चेत्तत्राह। यस्तावदात्मतत्त्वं विजानाति स पितुरपि पिता सद् भवति। लौकिकं पुत्रत्वं ब्रह्मविद्याविषये आतिदेशिकेन पितृत्वेन श्रौतेन बाध्यते। अत एवोपनिषदि श्रूयते—

"कामं पित्रे वाचार्याय वा शंसेदात्मन एवास्य तत् कृतं भवति"।

हरिवंशेऽपि—

पुरा ह्यधर्मादिविनष्टसंज्ञाः, देवास्तमर्थं तनयानपृच्छन्।
ज्ञानेन सम्यक् परिगृह्य हस्ते, तान् पुत्रकाः शंसतमित्यवोचन्॥

आहुश्च सर्वज्ञगराधराद्याः अध्ययनसंप्रदायतिलकभूता योगनिष्ठाः—

देवहूत्यै हितः पुत्रः कपिलस्तत्त्वमूचिवान्।
पितरं चाह कृष्णोऽपि तस्मात्पुत्रो गुरुर्भवेत्॥

इति। नन्वपशूद्राधिकरणे उपनयनाभावेनाध्ययनाभावान्न शूद्रो ब्रह्मविद्यायामधिकारीत्युक्तम्। शूद्रसमैव ब्राह्मणादीनामपि स्त्र्युपनयनादिरहिता। स्त्रीशूद्रसाम्यात्। शूद्रस्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां कर्णपूरणमपि स्मर्यते। अस्ति च प्रसिद्धिः "स्त्रीशूद्रवर्जमधीष्वे" ति युक्तमिति। अन्या चास्ति स्मृतिः।

न ब्रह्म व्याहरेद्योषिद् बालः शूद्रोऽपजातिकः।
व्याहरन्त इमे दण्ड्या राज्ञा सन्मार्गरक्षिणा॥

इति। अपजातिको नाम ब्राह्मणब्रुवको भ्रष्टो गोलकादिश्चोच्यते। अपशूद्राधिकरणात्। कथं तर्हि विदुरादीनां ब्रह्मविद्याधिकारो दृश्यत इत्याक्षिप्योत्तरमुच्यते। आत्मज्ञानसिद्धानामधिकारो न विचार्यते इति।

प्राग्जन्मवासनाजन्यब्रह्मज्ञानप्रवृत्तयः।
आज्ञानशुद्धा इत्युक्तास्ते ब्रह्मण्यधिकारिणः॥

इत्यैतिह्यपठितं पुराणवचनम्। अत्र चाभिप्रायो वर्णितः। अपशूद्रारम्भ-

भाष्यस्य माभूच्छ्रौतोऽधिकारः । इतिहासव्यासपुराणादिमूलस्तु भविष्यति । अस्ति च पुराणादिष्वप्युपदेष्टव्यं तत्त्वमस्यादिवाक्यम् । तच्च वेदस्वरूपं न वेदः । आहुश्च भट्टाचार्याः—

तानेव वैदिकान् शब्दान् भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते ॥

महाभारते च—

श्रुतिभिर्बोधयेत् कांश्चित् पुराणादिगिरापरान् ।
पूर्वार्यवचसा कांश्चिल्लौकिकया च गिरापरान् ॥
यत्र यस्याधिकारोऽस्ति तं तेनैव प्रबोधयेत् ।
नचोपेक्षेत संप्राप्तं मुमुक्षुं ब्रह्मवित् क्वचित् ॥

इति । नृसिंहमन्त्रराजकल्पे तु श्रौत एवाधिकारो दर्शितः—

नृसिंहब्रह्मविद्यायां निर्गुणस्य परात्मनः ।
अधिक्रियन्ते शूद्राश्च स्त्री वापि शरणागता ॥

इति । न च "तस्माच्छूद्रो न वक्तव्यः" ( ) इति श्रुतिविरोधाच्छूद्रस्याधिकारं ब्रुवन्नयं कल्पः प्रमाणं न स्यात् । तस्याः श्रुतेर्यज्ञैकविषयत्वात् । कल्पस्तु ब्रह्मविषयः । ननु यथा "निषादस्थपतिं याजयेत्" ( श० ब्रा० ) इति वचनान्निषादस्यापि यज्ञाधिकारः । यथा च "एह्येवा ३ इदं मधू ३ इदं मधु इमं तीव्र सुतं पिबा ३" ( ऐ० आ० ५ । १ । १ । २६ ॥ ) इत्यारभ्य खण्डसमाप्तिपर्यन्तेन ग्रन्थेन दासानां वेदवाक्यविषये श्रवणं पाठश्च दर्शितः । नापितस्य च यथा श्रवशीतोष्णामन्त्रश्रवणं तथा च शमितृश्रपणं पत्नीवाचनं पत्नीजपः । तथा चाथर्ववेदिनां "अर्यमणं नु देवम्" ( आ० गृ० १।७।१३ ) इत्यादौ विशेषे कन्यां वाचयति तथैव ब्रह्मविद्यायां श्रौत एवाधिकारो भविष्यति शूद्रस्यापि । नैवम् । निषेधस्य बलीयस्त्वात् । अनेकश्रुतिविरोधाच्च । अत्यन्तशूद्रप्रायस्यापि जातिमात्रोपजीविनः स्त्रीवन्मूढस्यापि श्रद्धधानस्य ब्राह्मणस्य बोधकोऽयं मन्त्र इति द्योत्यते । तस्माच्छूद्रजातेरधिकारो नास्ति श्रौते । यदुक्तं नापितादेः श्रवणं तत्तावन्मात्रमन्त्रविषयनियतम् । मा भूच्छूद्रस्य श्रौतपूर्वोधिकारो ब्राह्मणस्त्रीणां तु न विरुध्यते । श्रुतिश्रवणनिषेधस्तासां नास्ति । श्रुतिपाठाभावेऽपि श्रुत्यर्थावधारणपक्षोऽस्त्येव । को नाम विरोधः । स्त्रीवर्ज्याध्ययनभावस्त्वैतिह्यमात्रम् । श्रीभागवते तु--

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा
कर्मश्रेयसि मूढानां श्रेय एव भवेदिति ॥

इति भागवताख्याने पुराणमूलोऽधिकारो दर्शितः। तथा च श्वेताश्वतरे द्वितीयायां मन्त्रोपनिषदि तु—

ज्ञानं श्रुत्वा ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्रादपि नीचादभीक्ष्णं
श्रद्धातव्यं तत्परेण हि व्यद्धितं(भवितव्यं?)। जन्ममृत्यू हरेत् ॥ इति ॥*

शिवधर्मोत्तरे च—

यस्तु वर्णावकृष्टः स्यान्नारी वा धर्मचारिणी ।
तावप्येतेन योगेन गच्छेतां परमां गतिम् ॥

भगवद्गीतासु च—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥
( गीता ९। ३२ ॥ )

एकादशस्कन्धे च—

स्त्रियो वैश्यास्था शूद्रास्तेऽनुकम्प्या भवादृशाम्। ( भा० ११।५।४॥ )
अनन्यशरणास्ते हि श्रद्धा येष्वापि दृश्यते ॥

याज्ञवल्क्योऽपि—

भूतात्मनस्तपोविद्ये ज्ञानं बुद्धेर्विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥
( याज्ञ० स्मृ० ३। ३३ )

ब्रह्मोपनिषत्परिशिष्टेऽपि—

नैव स्त्री न पुमानेष नैव चायं नपुंसकः।
यद्यच्छरीरमादत्ते तेन तेन हि लक्ष्यते ॥
तस्मात्सर्वे विजानीयुरात्मानं विश्वरूपिणम् ।
आचार्यश्चेत् परं ब्रह्म ब्रूयान्मुच्यन्त एव ते ॥

वासिष्ठरामायणे च—

श्वपचनिषादचाण्डलप्रश्नः कर्कटिकां प्रति ।
परं ब्रह्म ततोऽस्त्वेव स्त्रीणां ब्रह्माधिकारिता ॥

---

* अयं हि श्रुतिरूपः पाठः श्वेताश्वतरोपनिषदि न क्वापि दृक्पथमेति। कदाचिच्छ्वेताश्वतरशाखीये क्वचिल्लुप्ते शास्त्रे स्यात् ।

स्कन्दपुराणे कालिकाखण्डे पञ्चदशे मुक्तिखण्डे विष्णुं प्रति शिवो ब्रह्मक्षत्रविशां श्रेष्ठमध्यमादीनां गुरुत्वं प्रतिपाद्यमाह—

ब्राह्मणश्चापि विप्रस्य क्षत्रियस्य तथैव च ।
विशः शूद्रस्य सुश्रूषो गुरुः स्याद्योषितामपि ॥
शूद्राणां च तथा स्त्रीणां गुरुत्वं न कदाचन ।
गुरुत्वं केचिदिच्छन्ति नोत्तमं प्रति केशव ॥

विष्णुरहस्ये च—

कात्यायनी च मैत्रेयी गार्गी वाचक्नवी तथा ।
एवमाद्या विदुर्ब्रह्म तस्मात् स्त्री ब्रह्मविद्भवेत् ॥

एतेन यत्तैत्तिरीयैरुक्तम् "पुंसामप्यपरिव्राजकानां ब्रह्मविद्यायामनधिकारः" इति तदप्यपास्तम् । अपरिव्राजकानां स्त्रीणामिव पुरुषाणामप्यधिकारः कैमुत्यवादप्रसिद्धः । तदुक्तं ब्रह्मगीतायाम्—

श्रुतौ स्मृतौ वा परमार्थवेदिनः
श्रुता न ते वै यतयः प्रसिद्धाः ।
संन्यासिनो ये परमार्थवेदिनो
गार्हस्थ्यधर्मा बहवो विमुक्ताः ॥
तस्माद्ब्राह्मणमात्रस्य ब्रह्मविद्याधिकारिणः ।
उपदेश्ये गुरौ वापि नात्र वर्णाश्रमादरः ॥ इति

साधनचतुष्टयसम्पन्नस्तावदधिकारी । गृहस्थाद्यधिकारसमर्थनं सप्रपञ्चमद्वैतसिद्धौ द्रष्टव्यम् । विस्तरभयान्नेह लिख्यते । कल्पस्तु—

पुंवदन्धश्च योषिच्च ब्रह्मविद्याधिकारिणौ ।
श्रद्धिनो ब्रह्मवित्पुत्रो गुरुः स्यात्पितरं प्रति ॥ इति ॥१६॥

अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अन्तः ॥१७॥

ननु कथमुपदेशः कर्तव्यः । किं त्वंपदार्थानुवादेन तत्पदार्थोपदेशस्तत्पदार्थानुवादेन त्वंपदार्थोपदेशो वा । अत्रेदमुत्तरम् । अवः अवरो जीवः, आदावनुद्य परेण ब्रह्मणा योज्य इति शेषः । पश्चात् परः परमात्मा ब्रह्म, एना अनेन जीवेन अवरेण जीवेन सह योज्यः । ततो गौः श्रुतिः पदा पादेन महावाक्यात्मना एक-

देशेन वत्सं पुत्रभावमापन्नं शिष्यं बिभ्रती परमात्मस्वरूपेण योजयन्ती, उद-स्थात् उत्तिष्ठिदुत्कर्षेणास्ते श्रवणमनननिदिध्यासनरूपमुत्कर्षं प्राप्नोति । कार्य-कारणभेदविवक्षात्र । सा एव भवति कद्रीची । सा स्वात्मानुभूता । रीङ् गतौ । गतिरत्र नाशः । 'अञ्चू गतौ' यथा । कत् कुत्सितं संसारमशुभं रीयते ध्वंसते नाशयतीति परमात्मज्ञानाभ्यासः कद्री,तामश्चति गच्छति पूजयति चेति कद्रीची । स्वात्मानुभूतित्वात् । टिप्पणकारस्त्वाह—

> सनाभिर्ज्योतिरित्यादेरार्पितेति तु वेदतः ।
> अक्षण्वान्नाट् तदुक्तो नुट् कद्रीची विष्वगित्यतः ॥

अस्यार्थः—सनाभिरिदं पदं समानस्य सभावे । " ज्योतिर्जनपदे " ( ६-। ३ । ८५ ॥ ) ति सूत्रेण । यद्वा सह शब्दस्य सभावः " वोपसर्जनस्ये " ( ३ ।-३ । ८२ ॥) ति तथा । तस्मिन्नार्पिता भुवनानी' त्यत्र दीर्घो वेदत्वात् ज्ञेय इत्यर्थः । तथा अक्षण्वान्न विचेतदन्धः, इत्यत्र " छन्दस्यपि दृश्यते " ( ६ । ४ ७३ ॥ ) इति आट् " आतो नुट् " ( ८ । २ । १६ ३ ) इति नुट् । कद्रीची । अत्र किं कुत्सित-मञ्चतीत्यर्थे " आसर्वनाम्नः " ( ६ । ३ । ९१ ॥ ) " विश्वग्देवयोश्च टे ( ६ । ३ ।-९२ ॥ ) रित्यद्र्यादेशः । 'अञ्चतेश्चोपसंख्यानम्' इति ङीप् " अचः" ( ६ । ४ । १३८ ॥ ) इत्यतो लोपः । " चौ " ( ६ । ३ । १३८ ॥ ) इति दीर्घः । अर्थस्तु स एवैक एव । कमप्यर्धं भागलक्षणयावशेषितमशङ्कमपि जड़रूपमंशं पराकृत्य आगात् गच्छत्यनुभवति ।

ननु यद्यपि भागलक्षणया स्वस्य चिदंशग्रहणेनाङ्गत्याग उक्तस्तथापि माया तं जडांशं पुनरपि अपेक्षते सूते । इति चेन्न । क्व स्थाने जडांशं सूते पुनः । नहि स्वित् स्वात्मनि । प्रणष्टत्वात् । नाप्यात्मनि, नापि कारणे । तस्य निरस्ता-विद्यत्वात् । अथ कारणादियूथे तदपि नेत्याह । न हि यूथे अन्तरिति ईशमायाभि-प्रायेणैतदुक्तं भवति न जीवमायाभिप्रायेण । जीवमायानाशे सति कुण्ठितशक्ति-रीशमाया क्व संसाररूपं जडांशं सूते स्वित् । नात्मनि नाप्यात्मदेहेन्द्रियादियूथे । जीवमायांशेन तस्या अपि निर्मूलत्वेन नष्टप्रायत्वात् । कल्पस्तु—

> त्वमर्थमुक्त्वा परमेश ईर्यः
> पश्चात्तयोर्व्युत्क्रम ईरणीयः ।
> तदर्धपक्षेण जडांशहंत्री
> दृष्ट्वा श्रुतिं भीतिमुदास माया ॥ १७ ॥

अवः परेण पितरं यो अस्यानुवेद पर एनावरेण।

कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥१८॥

पूर्वमन्त्रोक्तव्यतिहारं जानन्नेव गुरुर्दैवतमित्युच्यतेऽनेन मन्त्रेण । अवः अवरो जीवः परेण परमात्मना योज्य इति शेषः । पश्चात् पर एना अनेनावरेण योज्य इति। अस्य जगतः पितरमीश्वरमन्वनुक्रमेणाचार्योपदेशक्रमेण यो वेद वेत्ति स एव कवीयमानः कवींस्तत्त्वज्ञान् शिष्यान् आत्मन इच्छन्। शानच् प्रत्ययः, स्वरस्त्वनुसर्त्तव्यः। कविमिव ब्रह्माणमिवात्मानमाचरन् । कविर्ब्रह्म स इवाचरतीति विग्रहः । आचरतीत्याचार्यः । 'आचार्यो ब्रह्मणो मूर्तिः' इति श्रूयते । नचैवं वाच्यमेवंविधा गुरवः सुलभा इति। यथावसरस्तूपदेशः। नात्र त्वरणीयमित्यत आह। क इह प्रवोचद्देवं कः दुर्लभः कः पुरुष इह ब्रह्मविद्यायां प्रवक्ष्यति तं देवं परमात्मानम्। वक्तरि लब्धे श्रोता स्यात्, तथा श्रोतरि सति वक्ता स्यात्। यतः श्रोतापि दुर्लभ इत्याह। मनश्चित्तमध्यधिकं शुद्धं कुतः कारणाज्जातं भवेत् । तत्र कारणं सत्कर्मादि तच्च दुरनुष्ठानम्। शुद्धान्तःकरणस्यैवाध्यात्मश्रवणं निर्वहतीति श्रोताऽपि दुर्लभ इत्यर्थः। कल्पस्तु—

यो वेद देवं व्यतिहाररीत्या  
  सोऽयं गुरुर्ब्रह्मसमः प्रसाध्यः।  
पुण्यैरतो वक्तरि शिष्यभावं  
  प्रायात् स शिष्ये सति वक्तृभावम् ॥

प्रायादिति सम्बध्यते ॥ १८ ॥

ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः ।

इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥१९॥

ब्रह्मविद्येतरमन्त्राद्युपदिष्टानां ब्रह्मलोकप्राप्तावपि पुनरावृत्तिरित्यनेनोच्यते। ये अर्वाञ्चो मनुष्या मन्त्राद्युपासकास्तान् उ एव पराञ्चो ब्रह्मलोकादिगामिन आहुः। ये पराञ्चो ब्रह्मलोकादिस्थास्तानर्वाचो मनुष्यानाहुः । ब्रह्मविद्याभावे मन्त्राद्युपदिष्टाः पुनरावर्तन्ते। मन्त्रादौ मनुष्याणामेवाधिकार इति सूचितम्।

ननु मर्त्यलोकस्थान् के ब्रह्मलोकं प्रापयन्ति, के वा ब्रह्मलोकस्थान् मर्त्यलोकं प्रापयन्ति। किं कर्माण्येवेत्याह। इन्द्र ईश्वरः प्रयोजककर्ता त्वञ्च भोः सोम सुन्वन् कर्मिन् प्रयोज्यकर्तः युवां या यानि कर्माणि चक्रथुः कृतवन्तौ स्थः तानि कर्माणि

धुरा अग्रेसरेण लिङ्गशरीरेण युक्ता युक्तानि रजसः मनुष्यलोकान् वहन्ति ब्रह्मादिलोकं प्रापयन्ति । रजसो ब्रह्मलोकाद्वा वहन्ति मर्त्यलोकं प्रापयन्ति । धुरा न युक्ता यथा रथस्य धुरा युक्ता अश्वास्तं रथं देशाद्देशान्तरं प्रापयन्ति तद्वदित्यर्थः । कल्पस्तु—

मन्त्रोदिता ये मनुजाः प्रयान्ति
ब्रह्मादिलोकानथ ते नृलोकान् ।
तत्त्वज्ञता यावदिमे भ्रमन्ति
कर्माण्यसाधारणकारणानि ॥ १९ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥२०॥

अतो ब्रह्मविद्यैवाश्रयणीया। सा चाविद्यासिद्धं जीवमनु(नू?)द्य तत्पदार्थप्रतिपादनममुमर्थमभिप्रेत्य जीवपरमात्मानावाह । द्वौ साधूनभ्युदयनिःश्रेयसपक्षान् बिभ्रतौ जीवपरमात्मानौ सयुजा । अन्योन्यममुं च तौ सखाया परस्परोपकारिणौ, समानमेकं वृक्षं व्रश्चनीयं देहं परिषस्वजाते परित आलिङ्ग्य तिष्ठतः । तयोर्मध्य एको जीवः पिप्पलफलसमं बहुदोषयुक्तमपि कर्मफलं स्वादु कृत्वा अत्ति स्वदिति (स्वदते?)। अन्यः परः परमात्मा अनश्नन् अभुञ्जानोऽपि अभितः अत्यर्थं प्रकाशते । अत्तीत्यत्र "एकान्याभ्यां समर्थाभ्याम्" ८ । १ । ६५ ॥ इति प्रथमस्तिङ् निहन्यते । पैङ्गिरहस्योक्तो बुद्धिजीवपक्षोऽप्यविरुद्धः । तत्र सत्त्वं नाम बुद्धिर्जीवोपाधिः, तेन संसारी जीवो लक्ष्यते । परमात्मभावमापन्नस्तत्र जीवो जीवशब्देन विवक्षितो न तु संसारी । स तु परमात्मैव । गुहां प्रविष्टावात्मानौ हि तद्दर्शनादित्येतदधिकरणविषयत्वमस्य मन्त्रस्य प्रतिपादयता श्रीशङ्कराचार्येणैतन्मन्त्रं प्रतिपाद्य विस्तरेण प्रतिपादितम् । कल्पस्तु—

जीवः परश्च प्रतिपादनीयो
जीवः परात्मेति विवक्तुकामैः ।
एकस्तयोः कर्मफलं तु भुङ्क्ते
चकाश्यतेऽन्योऽनशनः परात्मा ॥ २० ॥

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥२१॥

कोऽयमत्यर्थस्य प्रकाशस्तत्रेदमुत्तरम् । सुपर्णा मोक्षपक्षीया जीवा यत्रार्थे प्रकाशेऽभिव्यज्यमाने सत्यमृतस्यानन्त्यस्य सुखरूपस्य ब्रह्मणोऽनिमेषमनश्वरं भागं भजनं प्राप्तिं विदथा ज्ञानेन वृत्तिलक्षणेन अभिस्वरन्ति । अभिस्वरतिर्गतौ । अत्र ज्ञानमार्गे विघ्ननिरासकः परमेश्वर एव सेव्यमान इत्याह । विश्वस्य सर्वस्य भुवनस्य लोकस्य इनः ईश्वर एव ज्ञानमार्गप्रवृत्तस्य गोपाः गोप्ता रक्षकः । गोपायतेः क्विपि यलोपः । कथं भिन्नस्वभावयोरैक्यं तत्राह । स इनश्चिन्मात्रांशः । धीः इरा अवशिष्यमाणा यस्य स तथा । पाकं प्रशस्तं विगलितासद्द्वितीयत्वादिदोषं चिन्मात्रं सन्तं मा मामत्र वेदनेऽसन्निवृत्तिलक्षणे आविवेश प्रविशति । प्रवेश औपचारिकः । चिन्मात्रयोर्जीवपरयोरैक्यं न विरुध्यत इत्यर्थः । कल्पस्तु—

ज्ञानेन यत्तेजसि दीप्यमाने
ज्ञानस्य गोप्ता भवतीश्वरः सः ।
चिन्मात्रयोरैक्यमितस्तयोः स्या—
न्नित्यं ततो यात्यमृतस्य भागम् ॥

कल्पे तु प्रथमद्वितीयपादव्याख्या संक्षेपतः कृता ॥ २१ ॥

**यस्मि॑न्वृ॒क्षे म॒ध्वदः॑ सुप॒र्णा नि॑वि॒शन्ते॒ सुव॑ते॒ चाधि॒ विश्वे॑ ।**
**तस्येदा॑हुः॒ पिप्प॑लं स्वा॒द्वग्रे॒ तन्नोन्न॑शद्यः॒ पि॒तरं॒ न वेद॑ ॥२२॥**

एवं चेज्जीवानां मुक्तिः स्यात् कर्मफलं क नु । कर्मकर्तृत्वे न मुक्तिः स्यात् । प्रारब्धं तु न नश्यति । प्राप्ताप्राप्तविवेकेन लिङ्गदेहस्यैव भोक्तृत्वमित्युच्यते। यस्मिन् वृक्षे व्रश्चनीये लिङ्गशरीरे स्थिताः सुपर्णा जीवाः, मध्वदः कर्मफलभोक्तारो लोकाल्लोकान्तरं निविशन्ते कर्मफलं भुञ्जते, ऐहिकामुष्मिकफलानि सुवते कुर्वते च । अध्यधिकानि काम्यानि निषिद्धात्मकानि संसारकारणानि,तथा विश्वे सर्वात्मका अमुक्ताश्च भवन्ति । एवं लिङ्गदेहस्थानां जीवानां त्रैविध्यमुक्तम् । तस्य लिङ्गदेहस्य इत एव आहुः । परमार्थतः पिप्पलं कर्मफलं स्वादु स्वदनीयम् ।

ननु जीवस्य चिन्मात्रतत्त्वज्ञानादेव मुक्तिरस्तु, किमन्तर्गतेन तत्पदार्थज्ञानेन प्रक्रियापरिकल्पितेन । तत्राह । यतोऽग्रे तद् ब्रह्म उदुत्कृष्टं न नशत् न प्राप्नोत्येव स यः पितरं जगत्कारणं तत्पदार्थमीशं न वेद न वेत्ति । वैदिकेषु केवलयुक्तेरप्रामाण्यादिति भावः । कल्पस्तु—

यस्मिन् स्थिता ऐहिकपारलोकं
भोगं भजन्ते सुवते कृतीश्च ।
युक्ताश्च तस्यैव कृते न भोगा
यो वेद नेशं नहि तस्य मुक्तिः ॥ २२ ॥

यद्गा॑यत्रे अधि॑ गाय॒त्रमाहि॑तं त्रैष्टु॑भाद्वा त्रैष्टु॑भं निरत॑क्षत ।
यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं य इत्तद्वि॑दुस्ते अ॑मृतत्वमा॑नशुः ॥ २३ ॥

अथ महावाक्यविषये गायत्रीत्रिष्टुब्जगत्यश्छन्दांसि सन्ति तान्याह । गायत्रे गायत्रीछन्दसि । छन्दःसु 'स्वार्थ उपसंख्यानम्' (वा०४।५५॥) । अध्यधिकं सर्वोत्कृष्टं यद् ब्रह्माहितम् ' हि गतौ ' आ गतमवगतं ज्ञातं तद् ब्रह्म गायत्रं ब्रह्मेत्युच्यते । संज्ञाकरणस्य प्रयोजनं वक्ष्यामः । गायत्री ब्रह्मविद्येषा विद्या समाख्यायते । गायत्री छन्दस्त्वेतद्वाक्यं च, तत्सवितुर्वरेण्यमित्येतदेव सम्प्रदायादवगम्यते । ब्रह्मविद्यात्वेन गायत्र्यर्थोऽभिधीयते । सवितुर्लोकानां जनयितुः । क्षित्यादिकं सकर्तृकमित्याद्यनुमानसिद्धस्य । देवस्य चेतनस्य । ईशितुरिति तत्पदस्य वाच्यं रूपमुक्तम् । तत् तस्य सद्रूपं भर्गः भर्जनदहनप्रकाशात्मकं चिद्रूपम् । वरेण्यं वरणीयं प्रार्थनीयं सुखात्मकमानन्दरूपम । एवं पदत्रयेण सच्चिदानन्दात्मकमित्थं तत्पदलक्ष्यमुक्तरूपं धीमहि ध्यायामः । ध्यानकर्तारो नानारूपा उक्ताः इति त्वंपदवाच्यं रूपमुक्तम् । कीदृशस्य सवितुः । यः सविता नः अस्माकं सम्बन्धिनीर्धियः कर्तृत्वादिबुद्धीः प्रचोदयात्, अपनुद्यात्, इति त्वंपदलक्ष्यं रूपमुक्तम् । अत्र वेदमित्र आह—

द्वाभ्यां देवस्य वाच्यं यत् त्रिभिर्लक्ष्यं निजं स्मृतम् ।
जीवस्य वाच्यमेकेन चतुर्भिर्लक्ष्यमुच्यते ॥ इति ॥

पक्षान्तरे वाशब्दः । त्रैष्टुभात् त्रिष्टुप्छन्दस्कान्मन्त्रात् । त्रिष्टुभा प्रोक्तत्वात्त्रैष्टुभं ब्रह्मेत्युच्यते । निरतक्षत निष्कृष्य निर्णीतवन्तः । के । हिरण्यस्तूपाद्या आचार्याः । अत्रापि सम्प्रदायवशादेव मन्त्रविशेषधीः । संज्ञाकरणस्य प्रयोजनं वक्ष्यामः । त्रैष्टुभी ब्रह्मविद्येत्येषा विद्या समाख्यायते । ब्रह्मविद्यात्वेन उपेदहमिति मन्त्रो व्याख्यायते ।

उपेद॒हं धन॒दामप्र॑तीतं॒ जुष्टां॒ न श्ये॒नो व॑स॒तिं प॑तामि ।
इन्द्रं॑ नम॒स्यन्नु॑प॒मेभि॑र॒र्कैर्यः स्तो॒तृभ्यो॒ हव्यो॒ अस्ति॒ याम॑न् ॥
( ऋ० १।३३।२॥ )

अहं जीवात्मा हिरण्यस्तूपाख्यो धनदातारमिष्टदातारमप्रतीतमप्रमेयम् लक्ष्यम् पतामि इत् प्रविशाम्येव ब्रह्म। यथा श्येनः पक्षी इतस्ततश्चरित्वा पुनर्जुष्टाम् स्वप्रियां वसतिं प्रविशति तद्वत्। प्रवेशमात्रे दृष्टान्तः। प्रकृते चैक्यस्य विवक्षितत्वात्। ईशप्रवेशे कारणमाह। इन्द्रमीश्वरं नमस्यन्नाराधयन्नहमुपपतामि। शतृप्रत्ययः। कैः उपमेभिरन्येषां दृष्टान्तभूतैरत्युत्कृष्टैरर्कैरर्चनैः। स इन्द्रः कीदृशः। य इन्द्रः स्तोतृभ्यः स्तोतॄन्तारयितुं हव्यः प्रार्थनीयो यज्ञभवो वास्ति भवति। यामन् यावत्काले। यद्वा पक्षान्तरमिदं जगन्निरतक्षत। जागतं ब्रह्मप्रायपाठादक्षरसाम्याच्च जगत्याः पर्यायान्तरं वा इदं जगति जगत्यां छन्दसि प्रतिपाद्यत्वेन हितम्। पदं पदनीयम् गम्यफलरूपम्। संज्ञाकरणस्य प्रयोजनं वक्ष्यामः। एषा विद्या जगति ब्रह्मविद्येत्युच्यते। अत्र विशेषधीः संप्रदायविशेषादेव।

अहमिन्द्रो न परा जिग्य इद्धनं न मृत्यवेऽवतस्थे कदा चन।
सोममिन्मा सुन्वन्तो याचता वसु न मे पूरवः सख्ये रिषाथना॥
(ऋ० १०।४८।५॥)

अहं सप्तगुर्वैकुण्ठोपि जीवात्मापि इन्द्र ईश्वरः परमात्मैव न पराजिग्ये इत् नैव पराजयामि। धनं गोपितं वस्तु। न चापि मृत्यवे मरणाय मृत्युदेवतायै वा अवतस्थे। अत्र "प्रकाशनस्थेयाख्ययोश्च" (१।३।२३॥) इति लोकेऽप्यात्मनेपदम्। "समवप्रविभ्यः स्थः" (१।३।२२॥) इति। चतुर्थीदर्शनं हि "श्लाघह्नुङ्स्थे (१।४।३४॥) ति सूत्रात्। मृत्योरगोचरोहमित्यर्थः। कदाचन कस्मिन्नपि काले। अतश्च सोमं सुन्वन्तो यष्टारो मां ब्रह्मीभूतमीश्वरमित् एव याचत सुरहस्यं वस्तु प्रार्थयध्वम्। किं च भोः पूरवो मनुष्या मे मम सख्ये सखिकर्मणि पूजादौ न रिष्यथ न प्रमाद्यध्वम्। अत्र त्रैष्टुभे जागते च वाक्ये श्लोकौ द्वौ--

अहमीशं विशामीष्टं पदं लक्ष्यं समर्चितुम्।
यो भक्तैः प्रार्थ्यते मुक्तैस्त्रिषु लोकेषु सद्गतिः॥
जीवोऽहं न परैरीश्यो न मृत्युः प्रभवेन्मयि।
मां याचत धनं सौम्या यतध्वं मम पूजने॥ इति॥

एवं तावद्गायत्रत्रैष्टुभजागतसंज्ञाभिर्ब्रह्मविषयास्त्रयः पक्षा उपन्यस्तास्तत्प्रयोजनमुत्तरत्र वदन् दीर्घतमाः स्वमतं तावदाह। य इ तु ये तु तद् ब्रह्म छन्दोभिरनुपहितं निर्गुणं "तत्त्वमस्यादि"वाक्यलक्ष्यं निःसंज्ञकं विदुरनुभवन्ति तेऽमृतत्वमिहैव मोक्षमानशुः अश्नुवते। यद्वामृतत्वं सुखरूपत्वमानशुर्भुञ्जतेऽनुभवन्ति। अश्नातेरिदं रूपं परमस्मै पददर्शनात्। कल्पस्तु—

गायत्रं ब्रह्म यत्तत्सवितुरिति मनौ तन्मतं कौशिकानां।
हैरण्यस्तूपकानामहमिदुपमनौ त्रैष्टुभं ब्रह्म तत्स्यात् ॥
यद्वैकुण्ठोहमिन्द्रो न इति पठितवाञ्जागतं ब्रह्म तत् स्यात्—
एते पक्षा गुणाढ्या मम तु मतमिदं तत्त्वमस्यादितो धीः ॥ इति ॥

अस्यायमर्थः। तत्सवितुर्वरेण्यमिति मनौ मन्त्रे कौशिकानां विश्वामित्राणां मतं यद् ब्रह्म तद्गायत्रमित्युच्यते। हैरण्यस्तूपकानां मते ब्रह्म तु अहमिदुपमनौ अहं इत् उपेति पदत्रयवति मंत्रे। उपेदहमिति मन्त्र इत्यर्थः! छन्दोभङ्गभयादेवमुक्तम्। तद् ब्रह्म त्रैष्टुभं स्यात्। तथा यद् ब्रह्म, वैकुण्ठः सप्तगुरहमिन्द्रो न पराजिग्य इति मन्त्रे पठितवान्। वाक्ये संधेरैच्छिकत्वात्संधेरभावः। तद् ब्रह्म जागतमित्युच्यते। एते त्रयः पक्षा अपि गुणाढ्याश्छन्दोरूपोपाधिमत इति। सप्त गुणाः। एवं च मम दीर्घतमसो मतं तु "तत्त्वमस्यादि" भिरेव वाक्यैर्जाता धीर्ब्रह्मविद्येति ॥ ३ ॥

गायत्रेण प्रतिं मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥ २४ ॥

अत्र गायत्रत्रैष्टुभजागतसंज्ञाकरणप्रयोजनोक्तिः । तत्रापि सगुणे ब्रह्मणि अहंग्रहेणोपास्यमाने फलं यादृशं तदुक्तं ये अर्वाञ्च इत्यत्र । अत्र तु गायत्रादिभिर्गुणैः सगुणे ब्रह्मण्यहंग्रहेणोपास्यमाने फलविशेषः प्रतिप्रदर्श्यते । गायत्रेण गायत्रसंज्ञकेनोपासितेन ब्रह्मणार्कं सूर्यं प्रतिमिमीते गच्छति। धातूनामनेकार्थत्वात्। तदनन्तरमर्केण प्रयोजकेन साम सामाभिमानिनीं देवतां सालोक्येन गच्छति। ततो ब्रह्मलोकक्रमेण मुक्तिर्वक्ष्यते। त्रैष्टुभेन त्रैष्टुभसंज्ञकेनोऽपासितेन ब्रह्मणा वाकं वागभिमानिनीं देवतां प्रति मिमीते। वचेर्घञि कुत्वे मत्वर्थेऽच्। तेन वाकेन प्रयोजकेन वाकं महावाक्यमुपनिषदभिमानिनीं देवतां प्रति मिमीते। ततो ब्रह्मलोकक्रमेण मुक्तिर्वक्ष्यते। त्रैष्टुभशब्दे "उत्सादिभ्योऽञ्" (४।१।८६॥)

अथ क्रमप्राप्तं जागतं ब्रह्म त्यक्त्वा त्रैष्टुभब्रह्मणा तुल्यफलत्वात्प्रासङ्गिकविद्यात्रयमेकफलमाह । द्विपदा द्विपदामन्त्रेण प्रतिपाद्यं ब्रह्म। द्विपदा त्वेषा द्विपदी ब्रह्मविद्या। द्विपदा ब्रह्मणा उपासितेन वाकं प्राप्य तेन प्रयोजकेन वाकमुपनिषद्देवतां प्रति मिमीते। उपासकसंप्रदायप्राप्तं द्वैपदं वाक्यमुदाहरिष्यामः। "द्वित्रिभ्यां पादन्मूर्धसु बहुव्रीहौ", (६।२।१९७॥) इत्युत्तरपदाद्युदात्तत्वम्। चतुष्पदेत्यत्र बहुव्रीहिस्वरः। चतुष्पदा अनुष्टुभा बृहत्या च प्रतिपाद्यं ब्रह्म सामा-

न्यसंज्ञया चतुष्पात् । विशेषसंज्ञयानुष्टुभं बार्हतं चोच्यते । एषा चतुष्पदी ब्रह्म-विद्यानुष्टुभी बार्हती चोच्यते । चतुष्पदा ब्रह्मणा उपासितेन वाक् प्रति मिमीते उपासकः । अत्र संप्रदायप्राप्तानि द्वैपदानुष्टुभबार्हतान्युदाक्रि(हि?)यन्ते । तत्र द्वैपदं पराशर आह ।

आदित्ते विश्वे क्रतुं जुषन्त शुष्काद्यद्देव जीवो जनिष्ठाः ॥ ऋ० १।६८।२॥

यदा ते तव परमात्मनोग्रे क्रतुं प्रज्ञानं सम्यग्ज्ञानं जुषंत सेवंते आश्रयन्ते आदित्तदेव विश्वे सर्वात्मका मुक्ता भवन्ति । यदा तु शुष्कात् क्रतोर्नीरसादहंग्रह-शून्यात्सगुणज्ञानाद्धो देव जीवो जनिष्ठा जीवात्मा जायते इति । अथानुष्टुभम् ।

आपो अद्यान्वचारिषं रसेन समगस्महि ।

पयस्वाग्न आ गहि तं मा सं सृज वर्चसा ॥ (ऋ० १।२३।२३॥ )

भो आप उदकाभिमानिन्यो देवता इदं शृणुत । अद्यास्मिन्नहनि अन्वचारिष-मनुचरो जातोऽस्मि एतावन्तं कालम् । किमर्थम् । रसेन पारमार्थिकेन रूपेण ब्रह्मणा समगस्महि संगतो भवानीति धिया, 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' ( तै० उ० २ । ६ । ९ ॥) इति श्रुतेः । अतश्च पयस्वानुदकमध्यवर्ती त्वं च भो अग्ने अग्रणीः परमात्मन्नागहि आगच्छ । आगत्य च तं प्रागुक्तकारणवन्तं सेव-मानं त्वदभिन्नात्मकं वर्चसा तेजसा स्वस्वरूपेण संसृज संयोजय इत्याशास्महे । अथ बार्हतं ब्रह्मोच्यते । तत्र प्रगाथ आह ।

मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।

इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ (ऋ० ८।१।१॥)

परमात्मनोऽन्यद्वस्तु माचित् मैव विशंसत विशेषेण सत्यमित्यवोचत । अन्यशंसने संसारः स्यादित्याह । भोः सखायो मा मैव रिषण्यत रेषणं पुनः पुनर्हिंसनं मैत । रिषण इति कण्ड्वादौ पठन्ति । किन्तु इन्द्रमित् इन्द्रमेव स्तोता भजत । वृषणं मनोरथवर्षकं सचा सह भवत च । सुते यज्ञे मुहुः पुनःपुन-श्चोक्थानि श्रेष्ठानि वचांसि शंसत ब्रूत । गायत्र्यादिषु सगुणब्रह्मप्रतिपादकेषु महावाक्येष्वनुगतो यः प्रणवस्तमाश्रित्यापरास्ति ब्रह्मविद्येति ब्रह्मविप्रसक्तानु-प्रसक्त्या तामप्याह । अक्षरेणेति । अक्षरमिति यत्तत्प्रतिपाद्यब्रह्माप्यक्षरमुच्यते । अक्षरसंज्ञकेनोपासितेन ब्रह्मणा मिमते गच्छन्ति सप्तसंख्याता वाणीश्छन्दोरूपवा-गभिमानिनीर्देवताः । प्रणवार्थस्तु । अकारोकारमकाराः तत्त्वमसिपदार्थानाहुः ।

एभिस्तु राजससात्विकतामसं ब्रह्मविष्णुरुद्रात्मकं क्रमेण परमात्मनो रूपमुच्यते। जाग्रत्स्वप्नसुषुप्त्यवस्था वा, भूर्भुवः स्वर्लोका वा, ऋग्यजुःसामानि वा। ओमितिपदेन तुरीयं निर्गुणं स्वरूपमुच्यते। तस्मादोङ्कारशरीरो भगवान् समुदायात्मकेन। ओङ्कारो जपसमाधिभ्यां साक्षात्करणीयः इति। एषा विद्याक्षरब्रह्मविद्येत्युच्यते।

कल्पस्तु—

गायत्रवाग्यज्ञ इयर्ति सूर्यं सूर्येण सामाथ स याति वाकम् ।
यस्त्रैष्टुभे ब्रह्मणि धीसमेतो वाकेन वाकाख्यमुपैति देवम् ॥ २ ॥
इदमेव फलं याति द्विपदानुष्टुभेन च ।
ब्रह्मणा बार्हतेनापि प्रसङ्गादुदितं त्रयम् ॥ २ ॥
आदित्ते विश्व इत्याह शक्तिपुत्रः पराशरः ।
आपो अद्येति चाहस्माह सिन्धुद्वीपः स्वकं मनुम् ॥ ३ ॥
माचिदन्यदिति प्राह प्रगाथो बार्हतीं गिरम् ।
अक्षरेणेति सत्रापि च्छन्दोहंकारिदेवता ॥ ४ ॥
प्रसक्तानुप्रसक्त्येतदुदितं प्रणवाश्रयम् ।
क्रमेण ब्रह्मसंप्राप्तिर्गायत्र्यादिषु वक्ष्यते ॥ ५ ॥
गायत्रेण प्रतीतिमन्त्रस्य कल्पे पञ्च श्लोकाः सन्तिः ॥ ६ ॥

जगता सिन्धुं दिव्यस्तभायद्रथन्तरे सूर्यं पर्यपश्यत् ।
गायत्रस्य समिधस्तिस्र आहुस्ततो मह्ना प्ररिरिचे महित्वा ॥ २५ ॥

प्रकृतमवशिष्टं जागतं ब्रह्माधिकृत्योच्यते । जगता जागतेनोपासितेन ब्रह्मणा सिन्धुं समुद्राभिमानिनीं देवतां दिवि स्वर्लोके अस्तभायद् वशीकरोति। द्युस्थानप्रसङ्गाद्विद्यान्तरमाह। रथन्तरे रथन्तरसामप्रतिपाद्यं यद् ब्रह्म तद्रथन्तरसामप्रतिपाद्यत्वं सामाभिव्यङ्ग्यत्वमात्रम्। साम्नां वर्णपदवाक्यात्मकत्वाभावात्। रथन्तरे ब्रह्मणि उपासिते सति सूर्यं वशीकृतं परितः पश्यति। रथान्तरसामानि तु अस इत्यन्तवन्ति। छन्दःसामानि तु "अभि त्वा शूर नोनुमः ( ऋ० ७। ३२। २२॥)। रहस्य ग्रन्थे तु " आ एना वोग्निम । छन्दसि तु "एना वो अग्निं नमसा" (ऋ० ७। १६। १॥) इति। "प्रत्यु अदर्श्यायि वाम्" (ऋ०७।८१।१॥) "आ इमा उ वाम'। छन्दसि तु " इमा उ वां दिविष्टयः " ( ऋ० ७। ७४।१॥) अत्र "गीतिषु सामाख्या" (मी०२। १। ३६॥) इति वचनाद्गीतिमात्रस्य सामत्वं निराधारगीत्य-

सम्भवादाधारत्वमात्रमृचाम् । न च गीत्यर्थो ब्रह्मणापि वक्तुं शक्यः । अतो दृग्द्वारेणोपयोगो गीतेः । अतश्छन्दसि ग्रन्थे पठितानामेव ऋचामर्थः कथनीयो न साम्नाम् । अतो रथन्तरसामार्थो नोच्यते । अत एव साम्नां महाकल्प उक्तम् ।

साम्नां नार्थोऽस्ति वह्वेव सामर्थ्यं तेषु विद्यते ।

सर्ववेदोत्तमं साम तत्रान्ये अंशभाजिनः ॥

अथ गायत्र्यादीनां रथन्तरान्तानां विद्यानां महाफलमाह । गायत्रस्याजहल्लक्षणया गायत्रादेः सप्तकस्य गणस्य गायत्रत्रैष्टुभजागतद्वैपदानुष्टुभबार्हतरथन्तराख्यानां विद्यानां, समिधः फलाभिव्यञ्जकास्तिस्रो मूर्त्तयो भवन्ति । अयमर्थः । गायत्राद्युपासकानां ब्रह्मा वा विष्णुर्वा शिवो वावान्तरफलभोगानन्तरमार्चिरादिमार्गेण स्वकान्लोकान् नयन्ति, तत्र ते तदुपासकानां तारतम्येन तेभ्यः फलविशेषान्ददति । ब्रह्मादयस्त्रयोऽपि सगुणं ब्रह्मेत्युच्यते । तेषां लोको ब्रह्मलोक इत्येवोच्यते । आह च योगयाज्ञवल्क्यः ।

अहंग्रहेण सगुणब्रह्मणः सेवकान्नरान् ।

सगुणब्रह्मसंज्ञा ये ब्रह्माद्यास्ते स्वकं पदम् ॥

ब्रह्मलोकाख्यमानाय्य नन्दयन्ति यथायथम् ।

लयकाले तु तैः सार्धं मुच्यन्ते भावितात्मभिः ॥

इति । ततो ब्रह्मलोकभोगानन्तरं मह्ना महता विष्णवादिना सगुणेन ब्रह्मणा सह तदुपदिष्टसगुणोपासनं श्रुत्वा क्षणमवधार्य प्ररिरिचे प्रकर्षेण प्रपञ्चात् पृथग्भवन्ति महित्वा महत्त्वेन मुक्तत्वेन हेतुना । तदुक्तं ब्रह्मपुराणे ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।

परस्यान्ते यतात्मानः प्रविशन्ति परं पदम् ॥

इति । वाचस्पतिनाप्युक्तम् ।

विद्याकर्मस्वनुष्ठानैस्तोषितेश्वरचोदिताः ।

अधिकारं समाप्यैतत्प्रविशन्ति परं पदम् ॥ इति ॥

कल्पस्तु ।

यो जागतं वेद स सिन्धुलोकं
रथन्तरज्ञः परिसूर्यदर्शी ।
ब्रह्मादयस्तान्स्वपदं नयन्ति
ते तैः सहान्तेऽश्नुवते निजं स्वम् ॥२५॥

उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनाम् ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभीद्धो॑ घ॒र्मस्तदु॒ षु प्र वो॑चम् ॥२६॥

वैश्वामित्रहैरण्यस्तूपसाप्तगवपाराशरसैन्धुद्वीपप्रागाथराथन्तराः सप्त पक्षा उक्ताः । इयत्तद्विदुरिति स्वमतमुक्तम् । शास्त्रान्तरे चान्येऽपि पक्षाः सन्ति, तेषां परस्परविरुद्धानां मध्ये कः पक्षो ज्यायांस्तत्रोत्तरम् । उप उपग्राह्यत्वेन ह्वये स्वीकरोमि । सुदुघां सुष्ठुदोहिकां शुभकर्मभिर्व्यासादिभिः सूत्रप्रणयनेन दुह्यमानत्वात् । न वैशेषिकादिमतानुसारिभिः । "दुहः कप् घश्च" (३ । २ । ७०॥) । धेनुं कामधेनुस्थानीयाम् । धिनोति प्रीणयतीति धेनुस्ताम् । "आपो वाव धेनवः" (कौ०ब्रा०१२।१॥) ता हीदं सर्वं धिन्वन्ति इति । एतां प्रसिद्धां प्रकृतां च अध्यात्मपरां श्रुतिम् । ननु श्रुतिव्याख्यानरूपाणामपि दुर्बोधत्वात्सूत्रव्याख्यातश्रुत्यर्थो दुर्बोध एव तत्राह । उत तथा एनां प्रकृतां श्रुतिं दोहत् दोग्धि । कः । गोधुक् व्याससूत्राणां भाष्यकरणद्वारा सूत्रवाचां दोग्धा । सूत्रवाक्यतात्पर्यविवेचक एव श्रुतिं दोग्धि । तात्पर्यकथनेन श्रुत्यर्थसारं कथयति । न च भेदमाश्रित्य व्याससूत्रभाष्यकारादिमतमिह ग्राह्यमित्याह । सुहस्तः सुखहस्तः सुखकरः शङ्कराचार्यः स गोधुक् सूत्रवाचां तात्पर्यज्ञः भाष्यकारो व्यासादिसूत्रव्याख्यानद्वारा यथा गां श्रुतिं दोग्धि तथैव । तदर्थो नान्यार्थ इत्यर्थः । यद्वा । उत एव स एव दोहद्दोग्धा एनामुपनिषदम् । न च शङ्कराचार्यो मर्त्यमात्रमित्यत आह । श्रेष्ठम् अज्ञानलक्षणस्यान्तस्तमसो हन्ता । सवं जन्म सविता साविषदासादितवान् नोऽस्मदर्थाम् । नृशब्दसम्बुद्धिरेषेति केचित् । तत्र सवितापि जीवमात्रमित्यत आह । अभीद्ध इति अध्यात्मप्रकाशितः । घर्मः 'घृ क्षरणदीप्त्योः' । विगलिताविद्यः परमात्मैवात्र सूर्यपदेन विवक्षितो महापुरुष इति । यमवोचामेत्यारभ्य खण्डसमाप्तिपर्यन्तमेतामनुविद्यासहितामित्यनेनोपनिषद्वाक्येनायमर्थः स्फुटमुक्तः । न न्वध्यात्मप्रकरणे शङ्कराचार्योत्पत्तिनिरूपणं व्यर्थं तत्राह । तदु तद्वाच्यं ब्रह्मैव सुष्ठु असंशयं प्रकर्षेणाविपर्ययेणावोचमुक्तवानस्मि । अत्र शिवपुराणे कालिकाखण्डे वाराणसीमाहात्म्ये लगुडेश्वरोपाख्याने कणादाद्युत्पत्तिनिरूपणावसरे नारदं प्रति सनत्कुमारवचनम् ।

कृते ज्ञानप्रदः सत्यस्त्रेतायां दत्त एव तु ।
द्वापरे व्यासनामा तु कलौ शङ्करनामधृक् ॥
सत्यः सुमेधसो ब्रह्मा पुत्रभावमुपागतः ।

अत्रेर्दत्तः शक्तिपुत्रस्ततो व्यासः प्रकीर्तितः ॥
विष्णुतेजःसुतः साक्षाच्छङ्करः परिकीर्तितः ।
सत्यो ब्रह्मा हरिर्दत्तो व्यासो रुद्रः प्रकीर्तितः ॥
शङ्करः सविता साक्षादीश्वरः सर्वदैवतम् ।
युगे युगे प्रनष्टस्य शास्त्रस्योद्धारणाय वै ॥
श्रुतिस्मृत्यर्थबोधाय पाखण्डनिधनाय च ।
अध्यात्मशास्त्रविज्ञप्त्यै लोकानुग्रहकारणात् ॥
सुराद्यभ्यर्थितो देव ईश्वरः परमेश्वरः ।
अवतारांश्चकारासौ श्रुतिस्मृत्युदितान् स्वकान् ॥

कल्पस्तु ।
प्रामाणिकः श्रुत्युदितः स योऽर्थो व्यासोक्तरीत्या प्रतिपादितश्च ।
व्यासोदितं शङ्करबोधितं च यः शङ्करोऽसौ सविता स ईशः ॥
व्याकुर्वन् व्याससूत्रार्थं श्रुत्यर्थांश्च यथोचितान् ।
श्रुत्यर्थो यस्तथैवासौ शङ्करः सवितानन: ॥ २६ ॥ इति

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥२७॥

श्रीशङ्कराचार्यव्याख्या ब्रह्मविद्यैव निष्कृष्यत इत्याह । वसुपत्नी ब्रह्मविद्या।
वसू देवौ जीवपरमात्मानौ वसनौ छादनशीलौ पती ईशौ विषयत्वेन पतनीयौ
ज्ञापनीयौ यस्याः सा वसुपत्नी जीवपरावेकत्वेन प्रकाशयन्ती। "विभाषा सपूर्वस्य"
(४।१।३४॥) इति ङीष्, नकारश्चान्तादेशः । पुनः कीदृशी । वसूनां वत्स-
मिच्छन्ती । वसुमिति* रश्मिनाम देवतानाम च । वामदेवादीनामंशानां
देवतात्वेन भावितात्मनां ब्रह्मविद्याचार्याणां वत्सं पुत्रं भावितं शिष्यमिच्छन्ती
ममायमस्त्विति कांक्षन्ती । अत्र आह वेदमित्रः ।

ईशत्वेनैव योगेन भावितोऽस्य गुरुः स हि ॥
पुत्रस्य भावं प्राप्तो यः स च शिष्यस्तु सम्प्रति ॥ इति ।

हिं कृण्वती।'हि गतौ वृद्धौ च'। हि प्रसिद्धं गतमनुभवसिद्धं च देशकालानव-
च्छिन्नं सर्वशास्त्रप्रसिद्धं च हिङ् ज्ञानं यस्य तद्ब्रह्म हिङ्। "पञ्चमा ज्ञानवाचकाः"

* यास्कीयनिघण्टौ १।५॥ वसव इति बहुवचनान्तमेव पदं रश्मिनामसु पठ्यते । आचार्य-
स्त्वेकवचनान्तमपि रश्मिपर्यायं मन्यते। अथ च वसुशब्दोऽत्र देवता नामसु न स्मर्यत इत्यपि चिन्त्यम्।

इत्येकाक्षरनिघण्टुः (        )। ब्रह्मैव हिङ्कारः, इति श्रुतिः। तं वत्सं हिङ् कृण्वती ब्रह्मकुर्वन्ती ब्रह्मभावं नयन्ती। "लक्षणहेत्वोः क्रियायाः" (३ २। १२६॥) इति शतृप्रत्ययः। मनसा 'मन निर्वचनकर्मा'। मननेन गुरुवचनेन अभि आगात् आगच्छति। अत्यादरादेव निश्चितार्था भवतीति शिष्यस्य आत्मसाद्भवति। श्रद्धया हृदि स्थिरा भवति। सा पुनर्विद्या वेदान्तविचारादेव निश्चितार्था भवतीत्याह। दुहामश्विभ्यां दुहा दुह्यते पयः परमानन्दाख्यं पयः अश्विभ्यामिन्द्रियाश्विभ्यां गुरुशिष्याभ्याम्। द्विकर्मको दुहिः। कर्मणि प्रत्ययः। द्वितीया छान्दसी। पयो ब्रह्मामृतं क्षीरं च। अघ्न्या गोर्नामैतत्। गौश्चात्र श्रुतिः। अघं नयन्ती अहंतव्यात्वनित्या, पापहन्त्री इयमुपनिषल्लक्षणा महावाक्यलक्षणा सा वर्धतां दीर्घा भवतात्। असकृदावर्त्तमाना। दीर्घकालमनुवर्त्तते। आवृत्त्यवधिमाह। महते सौभगाय महानन्दाय महानन्दमनुसर्त्तुं, यावदानन्दाविर्भावस्तावदित्यर्थः। सुभगान्मन्त्र इत्यञ् *। कल्पस्तु।

> आचार्यः शिवभावितो निजसुतस्थानी तु शिष्यो मतः।
> जीवेशौ विषयीकरोति निजसाद्भूतात्मविद्या यथा॥
> शिष्यं ब्रह्म करोति सा श्रुतिमयी जीवेन दोह्या मतिः।
> वत्यां सानलसैर्नरैर्निजसुखप्रादुर्भवः सोऽवधिः॥२॥

**गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उं।**
**सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः॥२८॥**

उपहय इत्यादयश्चत्वारो मन्त्रा भारद्वाजीये सूत्रे वाश्यमानधेन्वनुमन्त्रणे विनियुक्तास्तथापि तद्विनियोजकोऽधियज्ञविषयः। अस्मद्व्याख्या त्वध्यात्मविषयेत्युक्तं प्रागेव। इदानीं ब्रह्मविद्याप्रचुरश्रुतेः प्रवृत्तिविषयविशेषानाह। गौः श्रुतिः अमीमेत्। "द्रम, हम, मीम गतौ"। रूपसिद्धिश्छन्दसि। पलायते वत्सं पुत्रभावमापन्नं शिष्यं ब्रह्मविद्यायामुपदिष्टम्। मिषन्तम् 'मिष दर्शने' पश्यन्तम्। सर्वदा ज्ञानमारूढम्। अनु उपलक्षयित्वा। अनेनारूढभावं प्रतिपन्ने शिष्ये प्रवृत्तिर्दर्शिता। अथ तदधरम् अनुभाविनं प्रत्याह। "हिङ् ब्रह्म" इदमुक्तं पूर्वमन्त्रे। मातवै उ। "तैत्र चान्तश्च युगपत्" (६।२।५१॥) इति युगपदुदात्तद्वयम्। अन्तर्भावितोऽत्र ण्यर्थः। मापयितुं ज्ञापयितुमेव पूर्वोक्तं वत्सं मूर्धानं मुख्यं प्रवर्तकं श्रुतौ

* अत्र सुभगान्मत्र इत्यस्योद्गात्रादिषु पाठात्सुभगस्य भाव इत्येतस्मिन्नर्थे "प्राणिभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्", ५।१।१२९॥ इत्यञ् ज्ञेयः। आद्युदात्तत्वञ्च ञित्त्वादिति॥

स्मृतावुपदेष्टारमज्ञानहिंसकम् अकृणोत् करोति। 'कृवि हिंसायाम्' (हिंसाकरणयोश्च ?) अनुभवी तु लोकहितकर्त्ता आत्मनं परं च संसारादुद्धरति। स हि ब्रह्म तत्त्वमसीति बोधयति शिष्यम्। अथ तदधरमभ्यासिनं प्रत्याह। सृक्काणम्, सृजेः कनिपि कुरिति भोजः। सृका वदनैकदेशः चर्वणाद्वार इति भट्टभास्करमिश्र आह। लेलिहान इत्यपरे। सृकाणं प्रयतमानमित्यर्थः। अभ्यस्यन्तमभ्यासिनमभि लक्षयित्वा वावशाना स्निह्यतो हितकारिणी श्रुतिः अभ्यासकालवर्ज मिमाति प्रतिपादयति धर्मज्ञं धर्मं नित्यनैमित्तिकात्मकम्। अथ तदधरं मुमुक्षुं प्रत्याह। मां प्रमां प्रमितिमात्मन इच्छन्तं वत्सं जिज्ञासुं मुमुक्षुं पयते। "अय पय गतौ" गत्यर्था ज्ञानार्थाः। अन्तर्भावितण्यर्थः। बोधयति पयोभिर्गमकैर्हेतुभिर्विचारैः। पयत इत्यत्र एकवाक्य इति प्रकृत्य युष्मदस्मदादेशा वक्तव्या इति वार्त्तिककारवचनान्निघातः।* अत्रारूढानां लक्षणानि श्रीशङ्कराचार्यशिष्यद्राविडस्वामिनोक्तानि।

अप्रसक्तसमाधिस्थदेहमात्रस्थितिक्रियः।
आरूढः स्यात् परानन्दी काललीलाक्रियोचितः॥
समाधावपरोक्षात्मविज्ञानानुभवो भवेत्।
समाधिविद्भिः प्रारब्धेतरकर्माकरः इति॥

तथा—

वाक्यैः संवाद्य सच्छास्त्राण्यभ्यसन् स्वपरोक्षधीः।
वर्ततेऽभ्यासकाले तु त्यजन् कर्म सदा स्वयम्॥
मुमुक्षुर्मोक्षकामी च स्वक्रियौघं सकृत् त्यजेत्।
साधनाल्पमहत्त्वेन मुमुक्षुस्तारतम्यतः॥

कल्पस्तु—

नारूढे विधिरस्ति संविदधिके कर्मावकाशोज्झिते।
लोके चानुभवी प्रवर्त्तकतया श्रुत्या प्रथां प्रापितः।
अभ्यासी निगमोदितेषु रमते त्वभ्यासकालं विना।
मोक्षेच्छुर्विहिताः क्रियाः प्रकुरुते काम्यां निषिद्धां विना॥२८॥ इति।

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत॥२९॥

---

* अत्र "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः" इति वार्तिकं स्मरणीयम्।

पयोभिरित्युक्तम्। विचारप्रवृत्तिरपि स्वप्रज्ञाकारिता नैव हिताय, किन्तु आचार्यप्रवर्तितैवेति वक्तुमाचार्योपदेश उच्यते। अयं जीव एव सः स्वस्य परोक्षब्रह्मप्रतिपन्नः शिङ्क्ते एकान्त उपदिशति। "शिजि अव्यक्ते शब्दे"। येन शिञ्जनकर्त्रा आचार्येण गौः श्रुतिरभीवृतानुप्रयोगादन्वर्था कृता। अन्यत्र ध्वंसने शब्दे तद्देशे नासाग्रे च वर्तते यद्यपि तथापि प्रकृतानुपयोगादन्यार्थता। धुरिति मनुष्यनाम*। अस्यति प्रेरयतीति असनः परः। द्वन्द्वसमासः। ध्वसनौ जीवपरौ श्रिता विषयीकुर्वती। अध्यधिकं यथा तथा मिमाति बोधयति। कम्। मायुं प्रमितिमात्मन इच्छन्तं मायावन्तं वा। मतुपो लोपः। "मायुर्वचसि मायायाम्" इति निघण्टुः। सा गौश्चित्तिभिश्चिन्तनाभिर्विवर्तनीभिर्युक्तिभिर्विद्युदपरोक्षरूपा भवतीति। प्रमाणजनितज्ञानस्यैवाविद्यानिवर्त्तकत्वादेवमुक्तम्। कार्यकारणयोर्भेदोपचारः। श्रुतिरेव प्रमाणमस्माकम्। श्रुतिजनितं ज्ञानमेव मननादिहीयमानसंशयादिदोषमपरोक्षं ज्ञानं भवति। अस्मिन्पक्षेऽन्तःकरणवृत्तिज्ञानानां क्षणिकत्वनियमो नास्ति। सहानवस्थाननियमश्च नास्ति। तदुक्तं विवरणे।

श्रवणजनितबुद्धिः संशयादिप्रमृष्टा,
सुकृतमननमृष्टा नैव सा स्यात्परोक्षा।
निकषति किमविद्यामप्रमाणं चरित्वा,
मतिषु च युगपत्त्वं स्थैर्यमिष्टं न यत्नैः। इति

ननु अविद्यानिवर्त्तकं वृत्तिलक्षणं यज्ज्ञानं तन्निवर्तते न वा। न चेत् द्वैतं स्यात्। तन्निवर्तते चेत् तन्निवर्तकं ज्ञानान्तरं स्यात्। तथा चानवस्थेत्याशङ्क्याविद्यानिवर्त्तकं परोक्षज्ञानं स्वत एव निवर्त्तत इत्याह। वव्रि रूपं निवर्त्तकज्ञानस्य रूपं स्वत एव प्रत्यौहत। प्रत्यूहो विघ्नो व्यहन्यत स्वयमेवोपरमति। तदुक्तं वाचस्पतिना।

"यथा कतकरजो रजोऽन्तराविले जले प्रक्षिप्तं रजोन्तराणि भिन्दन्स्वयमपि भिद्यमानमनाविलं पयः करोति एवमपरोक्षमात्मज्ञानमविद्यां निवर्त्तयत्स्वयमपि निवर्त्तमानं निरवद्यमात्मतत्त्वमवशेषयति"। नन्वपरोक्षज्ञानाश्रितः प्रपञ्चः कथं तेन शिञ्जनकर्त्रा आचार्येण दृश्यते व्यवह्रियते च तत्राह। विद्युद्भवन्ती सा गौर्मर्त्यमनित्यप्रपञ्चं नि चकार निराकरोत्। निकारो न्यकारः। अपरोक्षज्ञानेन

* निघण्टौ धुरिति पञ्चविंशति मनुष्यनामसु न क्वापि स्मर्यते। परमाचार्योऽपि न निराश्रयं पदं व्याकरोति। अतश्च क्वचिदन्यत्र निघण्टौ भवेदेवेति मृग्यं विद्वद्भिः।

मिथ्यात्वबोधमात्रं क्रियते न विनाशः। तेन दृशि व्यवहारो न लुप्यते। तथापि ज्ञान्यज्ञानिनोः प्रवृत्तिविशेषोऽस्त्येव। यथा कश्चिन्मृदा चण्डालपुत्तलौ द्वौ द्वे च कपिले कृत्वा द्वाभ्यां प्रयच्छति, तत्र तयोश्चण्डालकपिलाबुद्धयो मृद्बुद्धयश्च भवन्ति। तत्र यस्य (तत्रैकस्य?)मृद्बुद्धिः प्रबला तथान्यस्य चण्डालकपिला बुद्धिः। नासौ स्नाति मृन्मयचण्डालस्पर्शने नापि कृतार्थतां मन्यते कपिलास्पर्शने। अथ च मृन्मयचण्डालकपिले पश्यति व्यवहरति च। यस्य तु चण्डालकपिलाबुद्धी प्रबले तस्य भ्रान्तिमूलो व्यवहारोऽन्यथैव। एवं प्रकृतेऽपीति न कश्चिद्दोषः। कल्पस्तु।

जीवोप्ययं ब्रह्म भवेद् गुरुः स्या-
त्तदत्र वेदो वदतीशजीवौ।
स युक्तिमृष्टो ह्यपरोक्षबोधः
स्वनिर्मलीकृत्य वृथैव नश्येत्॥

इति। वृथैव। कारणान्तरमनपेक्ष्येत्यर्थः ॥२९॥

अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम्।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥३०॥

व्यतिरेकेण पूर्वोक्तदृढत्वाय संसारी कथ्यते। सौकर्यायादौ द्वितीयार्धव्याख्या। जीवः अङ्गीकृतजीवभाव आत्मा, मृतस्य नष्टस्य पूर्वपूर्वदेहस्य सम्बन्धिभिः स्वधाभिः। अन्न नामैतत् ( निघ० २।७॥)। उत्तरदेहभोगसाधनैः स्वधाभिरात्मीयं भोगं दधद्भिर्वा धर्माधर्मसंस्कारैश्चरति। "चर गतिभक्षणयोः" विषयानुपभुङ्क्ते। देहधर्मैः कथं देही लुप्यते तदभिमानीत्याह। सयोनिः सजन्मा देहादिजन्मादीन्यात्मनि मन्यमानो मरणादिधर्मवता देहेन्द्रियादिना सयोनिः। न च रूपादिवत् लोकायतिकचैतन्यवन्मदशक्तिवच्च देहेन सहोत्पत्तिरपारमार्थिकी शङ्कनीयेत्याह। अमर्त्यो देहधर्मैरपरामृष्टः। लोकायतिकेतरसर्वमते स्वात्मनो नाशे कृतनाशाकृताभ्यागमदोषप्रसक्तिः। लोकायतिकमतं तु को ददर्शेत्यत्र श्रुत्यैव भग्नं सर्वैर्दूषितं। ननु किमयं जीवः पराद्भिन्नो नेत्याह। पस्त्यानां मध्ये त्रयाणां सावस्थानां कारणलिङ्गस्थूलानां देहानां मध्ये वर्त्तमानं ध्रुवमचलं नित्यं ब्रह्मैव जीव उच्यते। कुतः। अनत् "अन प्राणने" प्राणधारणाक्रियायोगात्। शये शिष्ये "शीङ् सुप्तौ" छान्दसो द्विर्वचनाभावः "छन्दस्युभयथे" (३।४।११७॥) ति सार्वधातुकत्वाद् गुणः "छन्दसि लुङ्लङ्लिटः"। (३।३।६॥)। सुषुप्तावज्ञानमात्रो-

पाधिकं, ततस्तुरगातु। स्वप्ने तुरेण त्वरावता केवलेन मनसैव गमनशीलम्। ततो जागरे विषयवायुविक्षिप्तप्रायम् एजत् सर्वतः कम्पते दृढमेकरूपमप्यनाद्यविद्याया ईशाश्रिताया अंशे जीवज्ञानं कारणदेहस्थितं ब्रह्म जीवः सुप्तिवदिव भवति। ततः कारणदेहकार्ये लिङ्गे स्थितं जीवान्तरं स्वप्नवदिव भवति। ततो लिङ्गकार्यस्थूलदेहेस्थितं ब्रह्म जागरवदिव भवति जीवतमः। एवं ब्रह्मैव जीवः सदानादिस्थसहधर्मादिभिश्चरति स एष देहादिगुणवानिव। कल्पस्तु।

मायया एकदेशे धृतमपि परमं सुप्तिमज्जीवसंज्ञम
लिङ्गे तत्स्थूलजीवस्वपनयुगथ तज्जागरे स्थूल देहे।
स्थूले स्थूलाख्यजीवव्यवहृतिपरिगो जीव एष प्रमत्तो
धर्माद्यैः पूर्वसृष्टैर्भ्रमति स तु वृथा यावदात्मज्ञता स्यात्॥ इति ॥३०॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥३१॥

एवं तावज्जीवजीवतरजीवतमादिरूपेण त्वंपदार्थगतान् विशेषानुक्त्वा तत्पदार्थगता विशेषा वक्ष्यन्ते। सन्ति च पञ्च चैतन्यावष्टम्भाः।

ईशो गुरुश्च जीवश्च तदन्तर्यामिसाक्षिकः (कौ ?)।
चैतन्यस्कन्धकाः पञ्च मुक्तिरेतद्विवेचने॥

इति महायोगशास्त्रे। अपश्यं पश्यामि। महाभाग्यादर्षिरेवमाह। गोपा गोप्तारमीशम्। अथ गुरुम्। अनिपद्यमानम्, पदनं संसारस्तदाख्यायां निशब्दस्ततो निवृत्तस्तमपश्यम्। गोपामिति, "एष वै गोपाः" ( श० १४। १। ४। ९॥) इत्याद्युपनिषद्ग्रन्थोप्येवमेव योज्यः। अथ जीवः आचरन्तं धर्मं कुर्वाणं पराचरन्तमधर्मं कुर्वाणम्। चकारावन्योऽन्यमिश्रधर्मार्थौ। यद्वा। मर्त्यलोकमागच्छन्तम् परलोकञ्च गच्छन्तम्। चकारादागच्छन्तञ्च। पथिभिः पुराणाद्युक्तमार्गैः। यद्वा। देवयानः, पितृयानः, जायस्व म्रियस्वेत्येव तृतीयं स्थानमिति च तृतीयः पन्थास्तैः। "आपथयो" ( ऋ० ५।५२। १०॥) इत्याद्युक्तैर्वा। सापि ऋग्व्याक्रियते। केचिन्नरा आपथयः ऋजुमार्गिणः विपथयः ब्रह्मविद्यामार्गिणः। अतस्पथाः भक्त्या देवतोपासकाः। अनुपथा ऋजुमार्गिणः। एतैर्नामभि र्नमितैर्मार्गैः रश्मिमतैर्मार्गैः। विस्तारयन्तीति विष्टा नाम मनुष्या मह्यं मां प्राप्तुं यज्ञं क्रियाकलापमूहन्ते वहन्ति। आह च वेदमित्रः—

ब्रह्मपापक्रियाभक्तिमार्गाश्चत्वार एव नः ।
पापवर्जा नरा एतैस्त्रिभिः श्रेयो वितन्वते ॥

पापमार्गस्तु नानुष्ठेय इति प्रतिपाद्यमानश्रेयोहेतुरिति भावः । अथान्तर्यामी स एव परमात्मा सध्रीचीः सहाञ्चतीति । सन्ध्याक्रियादौ देवताभिः सहाञ्चिताः पूजिता दिशः । "प्राच्यै दिशे नमः"( तै०सं०अ०१।१।१॥) इत्यादिभिर्मन्त्रैर्वसानः । स एव विषूचीर्विगतगतीः कोणगतावान्तरदिशश्च वसानो नियच्छन्नन्तर्यामीत्युच्यते । यस्तु वस्त्राणि वस्ते आच्छादयत्यन्यस्मै अवश्यं नियमयतीति दृष्टम् । दिगुक्त्या हि जीवा नियम्या अभिप्रेताः । अथ साक्षी आ वरीवर्ति आवृणोत्यतिशयेन । भुवनेषु जगत्सु अन्तर्मध्ये यद्यत्तत्सर्वमावरणं चैतन्यादिति तत्प्रकाशकः साक्षी उक्तः । तन्नास्त्येव यत्साक्षिणाप्रकाशितम् । सर्वं हि वस्तु ज्ञानतयाज्ञानतया वा साक्षिचैतन्यस्य विषय एव । सर्वोपाधिविशिष्टेष्ववशेषितमुपलक्षितं चैतन्यं साक्षीत्याहुः । कल्पस्तु—

ईशो गुरुर्जीव उदीरितोऽन्तर्यामी च साक्षी परमात्मभेदाः ।
बोधोपदेष्टा भुवनेषु गन्ता स चादको वेदक एष एकः ॥ इति ॥३१॥

य ईं॑ च॒कार॒ न सो अ॒स्य वे॑द॒ य ईं॑ द॒दर्श॒ हिरु॒गिन्नु तस्मा॑त् ।
स मा॒तुर्योना॒ परि॑वीतो अ॒न्तर्ब॑हुप्र॒जा निर्ऋ॑ति॒मा वि॑वेश ॥३२॥

प्राक्प्रतिपादितात्मज्ञानादेव मोक्षो न कर्मणा नापि समुच्चयेनेति कर्मसमुच्चयनिराकरणम् । य ईमिदं कर्म करोति स नैवास्य इममात्मानं वेद वेत्ति । यस्तु ईमिममात्मानं पश्यति स पुरुषस्तस्मात्कर्मकर्तुः सकाशाद्धिरुक् नु पृथगेव । कर्तृकरणबुद्ध्योर्युगपदेककर्त्तरि विरोधात् । यस्त्वेते न्यायादिविरुद्धे ज्ञानकर्मणी मोक्षसमुच्चिते मन्यते स उभयभ्रष्टो मातुर्योनौ गर्भे स्यात् । सर्वगतोऽपि परिवीतो वस्त्रादिना अन्तश्चाविद्यादिना परिवीतः बहूनां प्रजाः पुत्रत्वेनानेकजन्मवान् । अन्तोदात्तत्वात्तत्पुरुषः। अर्थातिशयाच्च। अन्ये तु बहुव्रीहावपि बहुप्रजाश्छन्दसीतिनिपातनात् स्वरसिद्धिमाहुः । निर्ऋतिं मृत्युमाविवेशाविशति । कल्पस्तु—

यः कर्मकर्त्ता न स आत्मवेदी
य आत्मवेदी स पृथक्कृती स्यात् ।
एकत्र कर्तर्युभयं विरुद्धं
मृत्युं व्रजेदित्थममन्यमानः ॥ इति ॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।

उत्तानयोश्चम्वो ३ र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥३३॥

सगुणब्रह्मविद्यायां तु ज्ञानकर्मसमुच्चयो युक्त एवेति वक्तुं कांचन सगुण विद्यामाह । या द्यौः सैव मम पिता तयोर्जनिता सैव मम नाभिः सहोदरा स्वसा जनं कश्यपमिता जनिता । तारकादित्वादितच् । जनो हि कश्यपो यदजीजनज्जगत् भृगुवर्मणि (भृगुर्वारुणि ?।) * यद्वा । जनं कश्यपमियर्तीति । कर्त्तरि निष्ठा । तृचि ङीप् प्रत्ययः । अत्र जगति यो बन्धुर्भ्राता अग्निर्वा सोमो वा स एव ममापि बन्धु भ्राता । भृगुः शशी ।

देहेन सह जायेते सोमाग्नी भ्रातरौ विदुः ।

तयोरन्यतरच्छेदे देहः पतति सर्वथा ॥

इति योगमित्रः ।

या पृथिवी सैव मम माता मही इयं(दं ?) गोर्नाम ।

या मही कामधेनुरधिदैवं सैव मम गृहे इयं गौः ॥( तै० आ० २।६।२॥

"द्यौर्वः(नः?)पिता"(अथर्व०सं०९।१०।१२)"पृथिवी माता"इति च मन्त्राभ्यामेतत् स सूचितम् । द्यौर्मे पितेत्यादिरूपेण ध्यायेदिति विधिकल्पना । यथा द्रव्यदेवता सम्बन्धा द्विधिः कल्प्यते एवमर्थवादे वेदभागे वेद्यदर्शनाद् विधिकल्पना । वे हि विद्यायाः स्वरूपम् । न चास्य वामस्य पलितस्य होतुरिति वैश्वदेवमिति वैश्व देवशंसनशेषता । तत्प्रयोगे तथात्वमस्तु । इह तु ज्ञानमोक्षाक्षरप्रशंसेत्युच्यते अतः स्वातन्त्र्यमेतेषां मन्त्राणाम् । यदि केन चिद्विधिना अवच्छिद्य कस्मिन्नप्यं विनियुज्यते तदा तत् स्वातन्त्र्यं तच्छेषार्थम्। अत्रापि यदा जपपारायणादौ विनि योगस्तदा स्मार्यस्य प्रयोगसमवेतस्यार्थस्याभावात् अध्यात्मपरतोचिता । अन्य यदत्र किञ्चिद्वक्तव्यं तत्सर्वमूह्यम् । तत्र ध्यानान्तरं समुच्चिनोति । उत्तानयोरन्यो न्याभिमुखयोश्चम्वोः । अध्यात्मपक्षे ऊर्ध्वाधोदेहभागयोः । अधिदैवतापक्षे ब्रह्माण्डस्योर्ध्वाधोभागयोरन्तर्मध्ये योनिर्जगद्बीजमीश्वरोऽस्ति । तदुक्तम्—

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ( गीता १८।६१॥ )

इति । अध्यात्मपक्षे तु हृद्युपास्यो जगद्धेतुर्देहेन्द्रियादिप्रवर्तक ईशोऽस्ति अधिदैवपक्षे तु क्षीरसागरशायी नारायणो जगद्योनिः प्रसिद्धोऽस्ति । अ

* इदं कस्य वचनमिति नावगम्यते ।

जगद्योनावीश्वरे नारायणे बहिर्निर्गतरूपो जगत्पिता चतुर्मुखाख्यो ब्रह्मा जातः । स च स्वदुहितुः सरस्वत्या योनावन्तर्वीर्यमाहितवान् । तस्माद्वीर्यात्सर्गविशेष इति । "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्"(ऐ०ब्रा०३।३३) इत्यत्र खण्डेऽर्थः स्पष्ट उक्तः । अध्यात्मपक्षे स्वत्र हृदयस्थे देहादिप्रापके जगद्योनावीश्वरे बहिर्निर्गतरूपभिर्निर्गतश्चतुर्मुखस्थानीयः पिता तृतीयजन्मदातृत्वेन ममायं पितेति शिष्यैर्भावितो ब्रह्मविद्याचार्यः ब्रह्मा अनुरूपम् अन्तस्तत्त्वं गर्भमधात् । अन्तर्भावितोऽत्र ण्यर्थः । आधापितवान् आधारयत् । अस्खलितमचीकरद्वा । आरोपितवान्वा ।"डुधाञ् धारणपोषणयोः"। अनेन पिण्डब्रह्माण्डयोर्जीवपरयोश्चैक्यं सूचितम् । देहोऽपि ब्रह्माण्डः । तदाह श्रुतिः ।"पुरुषो ह वा अयं सर्व आन्दः"*(ऐ०आ० ३ । १ । २॥) इत्यादिना खण्डसमाप्तिपर्यन्तेन ग्रन्थेन । एतद्विद्याफलन्तु कश्यपसंहितोक्तं ज्ञेयम् ।

ब्रह्मविद्याप्रसङ्गोक्तविधानं ज्ञानतः फलम् ।
ब्रह्मविद्यासमुत्पत्तिरनुक्तं चेत् फलान्तरम् ॥ इति ॥

वामनस्त्वाह—

न ब्रह्मलोकसम्प्राप्तिरहंब्रहभूतेर्भवेत् ।
अन्यत्रोक्तं फलं कल्प्यं प्रत्यभिज्ञा फलं यदि ॥
अनारभ्योक्तविद्यानां न्यायशास्त्रफलं विदुः ।
अङ्गाश्च ब्रह्मविद्यानां कर्मसम्पत्फलं विदुः ॥
अङ्गाश्च ब्रह्मविद्यासु प्रोक्तं फलमतिव्रजेत् ।
प्रणयाश्रितगोदोहफलं यत्पृथगिच्छताम् ॥

इति । कल्पस्तु—

नाको मे जनको दितिर्भगिनिका सोमानिलौ भ्रातरौ ।
माता भूः सुरधेनुका गृहगवीत्येवं विचिन्त्यं ततः ।
देहार्धद्वयमध्यचित्तु दुहिता गर्भं पितुर्ब्रह्मदात् ।
तत्त्वं स्वाकृतिविष्णुनाभिजनिता दाधात्सरस्वत्यथ ॥
ध्यायेदेवं ततः पिण्डे जीवेशौ न पृथक् स्मरेत् ।
एवं चिन्तयतो ब्रह्मविद्योदेति विमोचिनी ॥ इति ॥

पृच्छामि॑ त्वा॒ पर॒मन्तं॑ पृथि॒व्याः पृ॒च्छामि॒ यत्र॒ भुव॑नस्य॒ नाभिः॑ ।
पृच्छामि॑ त्वा॒ वृष्णो॒ अश्व॑स्य॒ रेतः॑ पृ॒च्छामि॒ वा॒चः प॑र॒मं व्यो॑म ॥३४॥

प्रासङ्गिकनिवृत्तये पुनः पृथक्तानुसन्धानाय च चतुरः प्रश्नानाह । जीवरूपेण परमात्महष्टिरहं त्वा परमात्मरूपमीशं पृच्छामि पृथिव्या देव्याः महत्या

* ऐतरेयास्त्वाण्डमान्दमिति पठन्ति ।

मायाया अन्तं निवर्तकम्। प्रलयव्यावृत्त्यर्थमाह। परमात्यन्तिकं तथा पृच्छामि। यत्र कारणे सति भुवनस्य प्रपञ्चस्य नाभिर्बाहनं बन्धनमविशेषेण तत्कारणं पृच्छामि। महामायायाः साधारण्याज्जगद्वैचित्र्यजनकमसाधारणं कारणं पृच्छामीत्यर्थः। तथा पृच्छामि त्वां वृष्णो देहेन्द्रियादिस्वामिनो जीवस्य योऽश्वः इन्द्रियम् "इन्द्रियाणि हयानाहु र्विषयांस्तेषु गोचरान्" (कठ उ० ३। ४॥) इति श्रुतेः। तच्चेहान्तरं मनः सर्वेन्द्रियाण्यश्नुते व्याप्नोति। बलवत्वाच्च वेगवत्वाच्च तस्याश्वस्य मनसो रेतो रयणं "रीङ् गतौ" स्रुरीभ्यां तुट् च"( उणादि ४। २०२॥) "चरमधातुवशाद्येष्टत" (          ) इति गर्भोपनिषदुक्तेश्च। उदकनामैतत् (निघ० १। १२॥)। आप्यायकमश्वं स्वमनसश्चेष्टकं चेतनं पृच्छामि इत्यर्थः। तथा वाचो वेदात्परमं दूरं परं ब्रह्मेति केचित्। तच्चित्यं व्योम विशेषेणावितृ रक्षकं पृच्छामि। अवितृ चेत्कथं वाचः परमं निर्गुणम्, वाचः परमं निर्गुणं चेत्कथमवितृ। छान्दसं संप्रसारणम्। ओणेर्वा णिलोपः। "ओणृ अपनयने"। यतो निर्गुणशंसनं संसारापनेतृ पृच्छामि। कल्पस्तु—

मायानिवर्त्तकं किं स्याद्वैचित्र्यं किं निबन्धनम्।<br>
मनसः प्रेरकं किं स्यात् श्रुतेर्दूरः क ईश्वरः ॥३५॥ इति

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।<br>
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥३५॥

उत्तराण्युच्यन्ते। इयं ब्रह्मवित्सु प्रसिद्धा वेदिः ब्रह्मानुभूतिः पर आत्यन्तिकोऽन्तः निवर्त्तको हेतुः पृथिव्याः मायायाः। तथायं सर्ववादिप्रसिद्धो यज्ञोऽजहल्लक्षणया धर्माधर्मसंस्कारात्मकपुण्यपापराशिर्भुवनस्य प्रपञ्चस्य विश्लेषकारको ऽसाधारणो हेतुः तथायं प्रसिद्धः सोमो जगदीश्वरो जीवमनःप्रेरको वृष्णो जीवस्य योऽश्वो मनस्तस्य रेतः प्रेरकः। ब्रह्मा ब्रह्मीभूतः चतुर्मुखो विष्णुर्वा "आचार्यो ब्रह्मणो मूर्त्तिः"(मनु० २। २२६ ॥) इति श्रुतेः (स्मृतेः?)। भृगुशप्तत्वाद्ब्रह्मणो विष्णुशिववत्साक्षात्पूज्यत्वाभावादुरुरूपेण पूज्यत्वाच्चायं प्राकृतो ब्रह्मा ब्रह्मविद्यागुरुरेव वाचो वेदात्परमं दूरं व्योम परमन्तर्ब्रह्म परमार्थतः। शिष्यभाग्यवशाच्च विशेषेणावितृ संसारापनेतृ च। कल्पस्तु—

मायानिवृत्त्यै स्वनिजैक्यबोधो धर्मादिसंस्कारशुभैर्विशेषः—<br>
ईशो हि जीवस्य मनोविनोदी वेदात्परं ब्रह्म गुरूदितं स्यात् ॥३५॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।

ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥३६॥

परमे व्योमन् यस्य वक्ष्यमाणज्ञानकथनेनेत्याह । सप्तार्धगर्भाः अर्धकार्याः अर्धकारणरूपाः। प्रकृतयो विकृतयश्चेत्यर्थः। भुवनस्य षोडशकलस्य विकारस्य रेतः कारणम् । विष्णोः प्रकृतिविकारस्य पुरुषस्य प्रदिशा आज्ञयैव तिष्ठन्ति प्रवर्तन्ते । चेतनासहायजडानां प्रवृत्त्यनुपपत्तेः । विधर्मणि विरुद्धधर्मवत्याम् । ते चोक्ताश्चतुर्विंशतितत्त्वात्मकाः पदार्थाः । धीतिभिः ध्रीयमाणैरतिनश्वरैर्धर्माधर्मसंस्कारैः ते त्वया मनसा चेतसा च युक्ताः परिभुवः परिभवनाधर्माः । विश्वतः, ल्यब्लोपे पञ्चमीयम् । सर्वशास्त्राणि विज्ञापयन् विपश्चितोऽपि पुरुषान्परिभवन्ति संसारयन्ति । कथं ते इत्यत्र त्वयेत्युक्तम् । ङस् पर एव तेशब्दः प्रसिद्धः । उदात्तश्च तेशब्दः । अतस्तच्छब्दप्रकृतिकः । अत्राऽव्ययवृत्तिकारोक्तमुत्तरम् ।

ते मे शब्दावुदात्तौ चेत्तृतीयाथ स्वरादिषु ।
अनुदात्तावपादादावन्वादेशे च ङेङसोः ॥

साङ्ख्यशास्त्रसमुत्थापकोऽयं मन्त्रः । तदुक्तं साङ्ख्यशास्त्रे ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ (सांख्यका० ३ ॥)

इत्युपन्यस्य सांख्यशास्त्रमिह दूषितं विज्ञेयम् । विष्णोः प्रदिशास्तिष्ठन्तीति । विष्णाति स्नुह्यति स्निह्यति विश्नोति अज्ञानलक्षणं विषं नुदतीति वेवेष्टीति नोदनाद्विशतीत्यादि धातुभ्यो विष्णुशब्दःसाधितो विष्णुपदसिद्धौ मयैव। नुडुप्रत्ययान्ता एते। विषस्य लोपः। आदिशब्दाद्ददति । विष्णोते वन्दते विदन्तीत्यादयोपीष्णुन्प्रत्ययान्ताः । विशति वेष्टयति इति च ।

कारकेषु भावे स्यादिति व्युत्पत्तिसप्तकम् ।
कालत्रयेण तद्भेदादेकविंशतिरूपकम् ॥

प्रागुक्तधातुभ्यः कर्मकर्तृकरणेषु बहुलवचनात्संप्रदानापादानयोर्भावे इत्येवं सप्त व्युत्पत्तयस्ताश्च कालत्रयभेदादेकविंशतिधा भिद्यन्ते ।

एवं व्युत्पत्तयो विष्णावसंख्यातमुदीरिताः ।
सर्वशब्दार्थको विष्णुशब्दो विष्णावदीरितः ॥

इत्यलमतिप्रसंगेन । कल्पस्तु—

सप्तार्धगर्भा कृतषोडशापि विष्णावजा तिष्ठति मूलहेतौ ।
सत्त्वानि धर्मादिभिरुज्ज्वलानि संसारयन्त्येव विपश्चितोऽपि ॥

न वि जानामि यदिवेदमस्मि निण्यः सन्नद्धो मनसा चरामि ।
यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥३७॥

कीदृशः परिभवः कथं च तन्निवृत्तिरित्यत्रोच्यते । महाभाग्ययोगाद्दीर्घतमा एव तत्स्वरूप इव भूत्वाह । न वि जानामि जानन्नपि विशेषेण न वेद्मि इदं जगद्यदिव यदीये सत्त्वचित्त्वे गृहीत्वा यदिवा चिदिवावभाति अहं च यदिवास्मि तन्न विजानानि । तत्र हेतुः । निण्यः श्रुत्यादिभिर्निर्णीतोऽपि अविद्यया आच्छादिन्याःअन्तर्हितोऽहम् । ण्यत् शब्दः। लोपश्छान्द सः(तलोपश्छान्दसः?)निण्यः निर्णीतान्तर्हितनामधेयम् । (निघ० ३।२५॥) ततः सन्नद्धः सम्यग्वद्धः। केन । मनसा संकल्पविकल्पात्मना पुण्यपापसंस्कारहेतुना । ततश्चरामि ऊर्ध्वाधोमध्ये चरामि विषयानुपभुञ्जे वा । यदा काले मां प्रति आगन् आगच्छन्तः प्रथमजा ब्राह्मणाः सनकादिसमाश्च,आदित् तदनन्तरमेव ऋतस्य ब्रह्मणः संबन्धिन्या अस्याः प्रकृतायाः ब्रह्मविद्यारूपिण्या वाचः श्रुतेर्भागं भजनीयम् अश्नुवे प्राप्तवानस्मि । कल्पस्तु—

आदाय सच्चित्त्वमिदं यदीयं सच्चिद्भवेत्तन्न हि वेद्मि तेन ।
बद्धो यदा मामगमन्महान्तो ब्राह्मा तदैवाविदमित्युवाचः ॥३७॥

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना स योनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ।३८।

नन्वज्ञानाद्बन्धो ज्ञानान्मोक्ष इत्यवोचस्तर्हि ज्ञानाद्भवेन्मोक्षो जीवतो न वा । आद्ये जीवन्मुक्तलक्षणं वाच्यं द्वितीये ज्ञानादेव मोक्ष इति नियमो न किन्तु ज्ञानमरणाभ्यां मोक्ष इति स्यात्तत्राह जीवन्मुक्तलक्षणम्। अपाङ्,अप निकृष्टमञ्चतीति क्वचिदपकृष्टमधर्मशील इव लक्ष्यते । प्राङ्, क्वचित्प्रकृष्टं धर्ममाचरन्निव लक्ष्यते । तथाप्यस्य न पुण्यपापसम्बन्ध एति अपगच्छति । यतः एति च स्वधया ब्रह्मविद्यया। न ब्रह्मविद्यावतः पुण्यपापसम्बन्धः । स्वया ब्रह्मविद्यया धीयते। अथवा स्वं दधातीति स्वधः परमात्मा तं याति प्रापयतीति । क्विन् । तृतीयैकवचनम् । "आतो धातोः" (६।४। ४७॥)। अवग्रहाभावे हेतुरुक्त एव। रूढिशङ्का च जीवन्मुक्तौ न दृश्यत इति केचित् । मर्त्येन स्थूलदेहेन गृभीतः सम्बद्धः । दुर्ग्रहः सम्बन्धश्चेत्तर्हि इतरेभ्योऽस्य को भेदस्तत्राह । अमर्त्यः स्वयं न म्रियते कारणदेहच्छेदेऽपि विशीर्यमाणे लिङ्गदेहेऽपि स्थूलदेहानुवृत्तेः । उक्तं च योगशास्त्रे—

कुलालचक्रकं यद्वच्छिन्नमूलोऽङ्कुरो यथा ।
यद्वच्छरस्तथा ज्ञानच्छिन्नोऽप्यास्ते भवः सताम् ॥ इति ॥

यतः सयोनिः ससंस्कारः । संस्कारोऽपि कारणत्वाद्योनिरुक्तः । यद्वा । सयोनिरिव कदाचिद् ग्रहस्थाश्रमसहित इव । उपलक्षणत्वाद्वर्णाश्रमधर्मवानिव । ननु जीवन्मुक्तस्थितिरुक्ता न जीवन्मुक्तलक्षणम् । तत्राह । तानि प्रसिद्धानि शश्वन्ता पुनः पुनर्भवामि (नि ?) । छन्दसि शरीराणि । बह्वृचारण्यके शरीराणी३ (ऐ०आ० २।१।८॥) इत्युक्तम् । विषूचीना लोकगतिना वियन्ता विशिष्टात्मज्ञानेन छेत्ता । 'यम उपरमे' । एष जीवन्मुक्तः । किं सर्वे जीवन्मुक्ताः लिङ्गैर्ज्ञायन्ते नेत्याह । अन्यं कञ्चन जीवन्मुक्तं जना लिङ्गैर्निचिक्युरजानन् । अन्यं न निचिक्युर्नाजानन् ।

क्वचिद् दुष्टः क्वचित्तुष्टः क्वचित्पापः क्वचिच्छुचिः ।
जीवन्मुक्तो भ्रमत्येवं नैव कुत्रापि सज्जते ॥
दुर्विज्ञेया गतिस्तेषां योगसंत्यक्तकिल्बिषाः ।
जीवन्मुक्ता विरूपेण पर्यटन्ति महीतले ॥

कल्पस्तु—

धर्मी क्वचिद्धर्मविपर्ययी वा विद्यावशात्तत्र न लिप्यतेऽसौ ।
छेत्ता(छित्त्वा?)त्मबुद्ध्याखिलदेहबन्धं स जीवमुक्तः क्वचिदेव दृश्यते। इति॥३८॥

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥३९॥

वियन्ता विशिष्टात्मज्ञानेन छेत्तेत्युक्तम् । किं तद्विशिष्टमात्मज्ञानं तत्रोत्तरम् । ऋचः अजहल्लक्षणयात्र ऋग्वेदादयो वेदाः । अक्षरे, अश्नुते व्याप्नोति विषयानित्यक्षरं तस्मिन्नक्षरे जीवात्मनि । परमीयत इति परमं तस्मिंस्तत्पदार्थे । व्योमन् व्यापके । वाक्यार्थे ब्रह्मात्मैक्ये । वाक्यार्थे व्यापके । असिपदार्थ इत्येके । एवं त्रिधैव वेदमिति । कर्मकाण्डविषया वेदास्त्वंपदार्थविषयाः । सगुणेशविषया वेदास्तत्पदार्थविषयाः । वेदान्तास्तु ब्रह्मात्मैक्यपरा एव सर्वेऽपि वेदाः । ब्रह्मात्मैक्यविषया इति ज्ञात्वा ब्रह्मात्मैक्यावधारणं विशिष्टात्मज्ञानम् । यस्मिंस्त्रिधा स्थिते आत्मनि वेदा इन्द्रियदेवाः, ईशञ्च्या आधिकारिका अन्तरिक्षादिस्थानगा देवाश्च, वैराजाश्चिन्मया देवाश्चाधि उपरि उपरि विशिष्टाः सर्वेपि निषण्णाः अन्तर्भूता इति काण्डत्रयविषया वेदा ब्रह्मविषया एव । यस्तु पुरुषस्तद् ब्रह्म न वेद स ऋचा

ऋगादि वेदैः किं करिष्यति । केनोपायेनात्मानं संसारादुद्धरिष्यति । ये तु तद् ब्रह्म विदन्ति त इमे दृश्यमाना जीवन्त एव समासते सम्यगासते । समासनं मुक्तिः । कल्पस्तु—

वेदास्तु जीवे परमे तदैक्ये तात्पर्यवन्तस्त्रिविधाः सुरास्तथा ।
पुमांस्तु तद् ब्रह्म न वेत्ति येन किं तस्य वेदैः स्वधिया वियुक्तैः । इति ॥

सूयवसद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥४०॥

ब्रह्मविद्यानुभवपर्यन्तमितरकाण्डानुष्ठानमावश्यकमित्याह । बुद्धिस्वरूपिणीं धेनुं पुरस्कृत्योच्यते । भो बुद्धे ! अतिक्लेशात्मकतुच्छफलत्वेनात्युग्रत्वाच्च कर्म त्याज्यम् । यथा पातित्यं न भवति तथा । कर्म त्युक्तं न शक्नोषि चेत्सत्कर्मविषयिणी भूयाः । साधु यवसं सत्कर्माभिविषयीकरोतीति सूयवसत् । ततो भगवत्येव भविष्यति । ईश्वरार्पितं कर्म स्यादित्यर्थः । अथोऽनन्तरं वयमपि भगवन्तः स्याम शुद्धान्तःकरणाः स्याम । तृणं तृणपर्यन्तं जगत् ईश्वररूपत्वेनाद्धि विषयीकुरु । भो अघ्न्ये भो अघहन्त्रि अहन्तव्ये । विश्वदानीं, पशुभ्यो रात्रौ दीयमाना सांसारिप्रकृतिका दानी भवति तत्स्थनीयां विश्वखण्डनीयाम् आचरन्ती लक्षयन्ती शुद्धं निरवद्यं उद्गतानन्दं ब्रह्मरसं पिब आस्वादयस्व । यद्यप्यनयर्चा वाश्यमानायै होमधेनवे यवसं दीयते तथाप्यध्यात्मव्याख्यायां न सा रीतिरादर्त्तव्येत्यवोचामः । तद्विनियोगदशायामेव तथाविधस्योपयुक्तत्वात् । उदकमिति सुखनामेति शाकपूणिः । यद्वा । कं सुखमकं दुःखम् । उद्गतमकं यस्मात्तदुकं सुखरूपं ब्रह्म । तर्हि पूर्वपदप्रकृतिस्वरः स्यात् । पाशादिपाठादन्तोदात्तत्वम् । छान्दसव्यत्ययश्च । आस्य कम्बलम् यद्वा । काद्दुःखादुद्गतमुदकमिति तत्पुरुषत्वादन्तोदात्तः । कल्पस्तु—

कार्या क्रिया चेद्विहितैव कार्या,
सेषार्पिता चेत्सकलात्मके धीः ।
मायाविनाशस्तत आत्मसौख्य-
प्रायस्त्वमेत्र सति कामधेनुः ॥ ४० ॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥४१॥

नन्वनेकेषां ब्रह्मवादिनामनेकधा प्रतिपादितप्रकाराः सन्ति तत्र कीदृशः प्रामाणिकः प्रकारः कीदृशो नेत्युच्यते । अद्वैतपर्यवसायी स सर्वोऽपि प्रामाणिक एवेत्यभिप्रेत्याह । गौरीः, गौरं शुद्धं ब्रह्म तत्परा श्रुतिः गौरीः । मत्वर्थे ई प्रत्ययः । मिमाय प्रतिपादयति । सलिलानि बहुनामैतत्(निघ०३।१॥)। बहूनि वस्तुनि । यद्वा सलिलानि स्वयं प्रतिपादितान्यपि सन्ति लीलानि सम्यग्ज्ञाननिवर्त्यानि । यद्वा । सस्तत्पदार्थः लिस्त्वंपदार्थः लम् असिपदार्थः, तान्युदकादीनि तत्त्वानि तत्कुर्वती एकं तत्वं प्रमिनयन्ती एकस्मिन् तत्वे विलापयन्ती सती एकपदी भवति । पद्यते ज्ञायत इदि पादो विषयः । बहुव्रीहौ सुब्लोपे"पादोऽन्यतरस्याम"(४।१।८॥)इति ङीपि पदादेशः । एकः पादो विषयः प्रतिपाद्यो यस्याः । एकमेव ब्रह्म प्रतिपादयन्तीत्यर्थः । तत्त्वं पदार्थविषयत्वेन द्विपदीत्यपरे । "द्वित्रिभ्यां पाद्न्मूर्धसु बहुव्रीहौ"(६।२।१९७) इत्युत्तरपदाद्युदात्तत्वम् । इहारभ्य वक्ष्यमाणाः पक्षाः पूर्वपूर्वपक्षाशक्तविषयाः । एकपदी द्विपदीत्यन्ये । त्रिपदीत्यन्ये । तत्त्वमसिपदार्थविषयत्वात् । सा गौरीश्चतुष्पदीत्यपरे । विश्वतैजसप्राज्ञतुरीयविषयत्वात् । एकपदीति चतुष्पदीति । पञ्चपदीत्यन्ये । विश्वतैजसप्राज्ञतुरीयेश्वरविषयत्वात् । द्विपदी चतुष्पदी षट्पदीत्यन्ये । धातुषट्कसमीक्षणात् । एकपदी द्विपदी चतुष्पदी सप्तपदीति केचित् । धातुपञ्चकजीवेश्वरविषयत्वात् । अष्टापदी । अष्टमूर्तिविषयत्वात् । नवपदी । अष्टमूर्तिनिर्गुणविषत्वात् । एवमनेकधा बभूवुषी भवति गौरीः अनेन क्रमेण सहस्राक्षरा । सहस्रस्यार्थानां प्रतिपादकान्यक्षराणि पदाणि यस्याः सा तथोक्ता । एवंभूता श्रुतिः परमे आत्मनि व्योमन् व्यापके विशेषेणाविद्याया ओतयंपनेतरि विशेषेण रक्षके वा ब्रह्मण्येकस्मिन्नेव तात्पर्यवती कर्तव्या ।

तदुक्तं प्रशंसायाम्—

ज्ञातुरज्ञानबाहुल्यात् सम्प्रदायवशेन वै ।<br>
बहूनां कल्पना देवे वेदवाक्यानुसारतः ॥<br>
गुर्वी चेत् कल्पना लघ्व्या साधनं यदि जायते ।<br>
तत्क्रमेणैकपर्यन्तं ततो मुक्तिरदूरतः ॥<br>
अनेकप्रतिभानं चेद्ब्रह्मण्येवागतं भवेत् ।<br>
यर्हि वै यस्य सिद्ध्यर्थं यथेष्टं कल्पना तदा ।

कल्पस्तु—

भूयांसि वस्तूनि जगाद वेदः

साक्षात् स एकार्थपरो बुधानाम् ॥

द्व्यादिः सहस्रान्तमनूद्य चार्थं

तात्पर्यमेकत्र दधाति मुक्तौ ॥४१॥

तस्याः॑ समु॒द्रा अधि॒ वि क्ष॑रन्ति॒ तेन॑ जीवन्ति प्र॒दिश॒श्चत॑स्रः ।

ततः॑ क्षरत्य॒क्षरं॒ तद्विश्व॒मुप॑ जीवति ॥ ४२ ॥

ननु सर्वासां श्रुतीनां ब्रह्मपरत्वे पुण्यविषयश्रुत्यभावेन पुण्यपापाभावः स्यात् । पुण्यपापाभावे तन्मूलसंस्कारवन्मोक्षाभावः स्यात्तत्रेदमुत्तरम् । तस्या ब्रह्मविषयायाः गौर्याः सम्बन्धिन्याः समुद्रा अवान्तरवाचः । वाक्यैकवाक्यतापक्ष एव श्रौतः नतु पदैकवाक्यतापक्ष इति सूचितम् । तस्याः समुद्रा इति वाचः समुद्रा इत्यनुक्रमणिका(सर्वानु०१।१६४॥)। समुद्रा इति वाच इत्यर्थः । तस्या अक्षरमित्यापः। सा प्रस्तार पङ्क्तिः । तस्याः समुद्रा इति ऋगेव । समुद्रवन्त्यर्थानिति च समुद्राः । समुद्रवन्त्याप एभ्य इति च । इति वाचः । तथा मुदमानन्दं राति ददातीति मुद्रा ब्रह्मविद्या इति च, तत्सहितास्तदेकवाक्यतां गताः अवान्तरवाचः समुद्राः । ब्रह्मविद्यायां महातात्पर्यवती गौरीः । आह चोपवर्ण्यः-?

बोध्यान्तरात्यये वाचां महातात्पर्यमुच्यते ।

अन्यार्थमुच्यतेऽन्यच्चेत्तदेवान्तरशब्दितम् ॥

इति । न चान्यपराणामर्थो न ग्राह्यः प्रमाणान्तराविरोधिप्रतीतार्थपरित्यागे कारणाभावात्स्वार्थपर्यवसितानामेव वाक्यानां "सर्वे वेदा यत्पदमामनन्ति"(कठ०उ०२।१५॥) इत्यादिश्रुतिस्मृत्यादिभिर्महातात्पर्यं ब्रह्मणि बोध्यते। ता वाचोऽध्याधिकं धर्माधर्मात्मकं वस्तु विधया विधिप्रतिषेधात्मकरीत्या क्षरन्त्युपलक्षयन्ति बोधयन्ति । यथा हि वत्सपायने तात्पर्यवन्त्योऽपि धेनवः प्रसङ्गात्स्वामिभ्योऽपि क्षीरं समर्पयन्ति तथेत्यर्थः । तेन श्रुत्युपक्षिप्तधर्मादिना जीवन्ति जीवीभूय प्रयतन्ते, जीवा इव आचरन्ति । परमार्थतो मिथ्यात्वात् । आचारे क्विप् । प्रदिशः प्रदेशितस्य विधिप्रतिषेधाद्यात्मकरीत्या शास्त्रस्य योग्याः चतस्रो ब्राह्मणाद्याश्चतस्रो जातयः । जातिमतामिह लक्षणा । ततः ब्राह्मणाद्याचरितधर्मादेः क्षरति वर्षासु पतति अक्षरमुदकं तद्विश्वं स्थावरजङ्गमात्मकं जगदुप उपेत्य स्वीकृत्य जीवति निवर्हति । अतो जगद्धात्री भवतीत्यर्थः । कल्पस्तु—

था ब्रह्मसूत्या उपवाच एता धर्मादिमाहुस्तत एव लोकः ।
धर्मादिना तेन पयःप्रपातं तद्विश्वमादाय वहत्यजस्रम् ॥
अतः सर्वश्रुतीनां स्यान्माहातात्पर्यमात्मनि ।
मानान्तत्तराविरोधे तु प्रतीतोऽर्थो न चोद्यते ॥ इति ॥ ४२ ॥

शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।
उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥४३॥

ननु महावाक्ये स्थितानां का स्थितिः, का चावान्तरवाक्येषु स्थितानाम् । महावाक्यप्राप्तौ च किं साधारणं कारणम् । एतेषां त्रयाणां प्रश्नानां क्रमेणोत्तरमाह । यागसमाप्तावप्यदग्धहविर्जनितो धूमः शकमयस्तदुपस्थानमनेनेति भारद्वाजसूत्रम् । उक्तञ्च । "शकमयमिति शकधूमः"(ऋ०सर्वा०१।१६४॥) इति । अत्रैव मन्त्रे उक्षाणं पृश्निमित्युक्षापदेन सोम उच्यते । इत्यनुक्रमणिका । ज्ञानकाण्डे पुनः शकमयं धूममित्यस्यान्य एवार्थः । अधियागाविनियोगविषयमन्त्रत्वे सत्युपनिषत्सु सत्त्वात् । अतएव प्रयोगसमवेतार्थप्रकाशकत्वं नास्ति । प्रयोगाभावान्मन्त्रत्वेऽपि जपपारायणादिविनियुक्तानामदृष्टार्थानामर्थः प्रकाश्यते । अध्यात्मपरवाक्याभ्यासेन फलाधिक्यम् । यदाह वृद्धमनुः ।

अध्यात्मवाक्यजपनादुक्तं कोटिगुणं भवेत् ।
तदर्थमनुसंधत्ते जपंश्चेदीश एव सः ॥

इति । शकमयं नानाशक्तिमयं धूमं धूमसदृशमावरकाज्ञानमैश्वरमाराद्दूरतो गतं तद्विषये कुण्ठितशक्तिकम् । विषूवता सर्वत्र प्रसृतेन ब्रह्मणा एना प्रत्यक्षादिप्रमाणसिद्धेनानेनावरेण जीवराशिना सह स्थितं धूमं महावाक्यार्थधिया परो विगलिताविद्यो ऽहमपश्यं पश्यामि । अत्रेयं वेदान्तसम्प्रदायस्थितिः । ईशमाया एका नित्या अनादिर्व्यापिका च । तच्छाया जीवमूलाख्या माया अनादयोऽनन्ताश्च । ज्ञाननाश्यत्वाज्ज्ञाने सति ज्ञानिनं प्रति ईशमाया कुण्ठितशक्तिर्भवति न नश्यति । सर्वमुक्तिप्रसङ्गात्सूर्यसमीपस्थरात्र्यभाववद्रज्जुसमीपस्थसर्पाभाववच्च मुक्तं प्रतिसर्वमायानामभावः । तदुक्तं वसिष्ठेन वेदान्तकारिकायाम् ।

एका मायेशितुः स्याद्विनशनरहितानादिका व्यापिका स्यात् ।
जीवाविद्या अनन्ता प्रथमविरहिना ब्रह्मविद्याविनाश्याः ॥
ज्ञानी सर्वां च मायां परिहरति तथा सूर्यपार्श्वस्थरात्री ।
रज्वाः पार्श्वस्थसर्पं शमयति महतीत्यन्यथा सर्वमुक्तिः ॥

अथावान्तरस्थितान्प्रत्याह । उक्षाणं गोपयसोक्षमाणं सिच्यमानं पृश्निं शीप्साविषयं सगुणरूपं कर्म च । " उक्ष सेचने " । अजहल्लक्षणयात्र पशुपुरोडाशादेरपि ग्रहः । पृश्निं स्वर्गनामैतत् ( निघ० १।४॥ ) साधने साध्योपचारः । यथा 'गोभिः श्रीणीत मत्सरम्" ( ऋ० ९।४६।४॥ ) "नड्वलोदकं पादरोगः" इति । पृश्निं स्वर्गादिहेतुं काम्यसोमादिकमपचन्त । धातूनामनेकार्थत्वात्संस्कुर्वन्ति । वीरा वैदिकाः ऋग्वेदादीन्विशेषेण वेदमीरयन्ति पठन्ति । अमहावाक्यप्राप्तौ साधारणकारणान्याह । तानीति अत्यन्तोत्कृष्टानि यच्छब्दाभावान्नित्यनैमित्तिकरूपाणि धर्माणि पूर्वोक्तानि सोमादीनि धर्मसाधनानि ज्ञानस्य पूर्वसाधनानि साधारणानि चासन्भवन्ति । कल्पस्तु ।

जीवैः समेतां बहुरूपमायामैशीमपश्यं स्वधिया निवृत्ताम् ।
अन्यश्रुतिस्था कृतिभिः सुराभानिष्कामकर्मात्मधियोहि हेतुः ॥

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥४४॥

लाक्षणिका क्रिया फलं कथं सुते ऽचेतना च कथं फलदेत्याशङ्क्य तुष्टेशावयवा देवता एव तत्कर्मवशात्फलदेति वक्तुमनन्ता अपि देवास्त्रिष्वेव देवेष्वन्तर्भूता इत्यभिप्रेत्याह । त्रयो देवा अग्निर्वायुः सूर्यश्च केशिनः दीप्तयः । तत्स्थानस्था देवता वा केशास्तद्वन्तः भूम्यन्तरिक्षस्वर्गस्थाः पार्थिवाः सर्वे देवा अग्नावन्तर्भवन्तीत्यग्निरुच्यते । एवमन्तरिक्षस्था देवा वायौ । एवं स्वर्गस्था देवाः सूर्ये । एवमग्निवायुसूर्याः । ऋतुथा "था हेतौ च च्छन्दसि *" ( ५।३।२६॥ ) इति हेतौ सप्तम्यन्तात्था छन्दसि । हेतुश्च निमित्तं प्रयोजनं वा । काले कालनिमित्तम् ऋतुरिति । यदा नाम चैकेषामृतौ ऋतौ क्रियमाणत्वाद्वा ऋतवो यज्ञाः । ऋतुथा यज्ञनिमित्तं विचक्षते दीप्यन्ते स्वकार्यं कुर्वन्ति संवत्सरे । अग्निर्ऋतुः संवत्सर इत्युक्तं संवत्सरमध्ये (निघ० । ऋतुद्वयमृतुद्वयम इति च विश्लिष्टोक्तिः । एषां त्रयाणां मध्ये एकोऽग्निर्वपते वसन्त ग्रीष्मयोर्दहति उपरि पतितं तृणादिकम् । तृणदाहदग्धा भूमिरधिकमौषधादिकं जनयति । " श्मश्रुवपसि प्र भूम " ( ऋ० १ । १४४ । ४ ॥ ) तथा " अप्स्वग्ने सधिष्टव " ( ऋ० ८ । ४३ । ९ ॥ )

---

* अत्र सूत्रे किमश्चेति सूत्रात् किमोऽनुवृत्त्या किं शब्दादेव हेत्वर्थे प्रकारार्थे च थाप्रत्ययो विधीयेत । भाष्यकृता च ऋतुशब्दादपि थाप्रत्ययो विधीयत इति चिन्त्यम् ।

विश्वं जलात्मकम् एकः सूर्योऽभि अभ्यात्मम् अन्तरस्थं प्रकाश्यते। अध्यात्मप-रवाक्याभ्यासेन फलाधिक्यम् । यदाह वृद्धमनुः।

अध्यात्मवाक्यजपनादुक्तं कोटिगुणं भवेत्।
तदर्थमनुसंधत्ते जपंश्चेदीश एव सः॥ इति॥

अथ महावाक्यस्याकर्षणेन चष्टे दर्शयति । हेमन्तशिशिरयोः तदानीमे-वौषध्यादिपरिपाकदर्शनादौ ऊष्माधिक्यापाताच्च । शचीभिः स्वव्यापारैः स्व-प्रज्ञाभिर्वा देवत्रयान्वितमेतत्पदम् । प्रावृट् शरदोस्तु ध्राजिः शब्द एव। एकस्य वायोर्न दृश्यते। नैव रूपमस्य दृश्यते। तथा। "आत्मा देवानां भुवनस्य गर्भः" (ऋ० १०।१६८।४॥) इति मन्त्रप्रापिकार्था वा उपलक्षणार्था इयमृक्। कल्पस्तु—

भूखस्वरीशा अनलानिलेनाः स्वकर्मभिश्चित्रितलोकयात्राः—
त्रिष्वेव देवा सकलाश्च सन्ति दद्युः फलं कर्मणि नाशिनस्ते। इति॥

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥४५॥

नन्वेवं देवतासद्भावे सत्युपासितप्रसन्नीकृतदैवतस्याधीतवेदस्य श्रुतव्या-करणमीमांसाद्व्यव्युत्पन्नपदपदार्थस्याचार्यं विनापि ब्रह्मज्ञानमुत्पत्स्यत इत्याचा-र्येणालं तत्राह । चत्वारि वाक् वाचो वेदस्य परिमितानि गणितानि पद्यन्त इति पदानि विषयास्तानि सर्वाणि कार्त्स्न्येन विदुर्विदन्ति ब्राह्मणा वेदज्ञाः न सर्वे ब्राह्मणाः किन्तु ये मनीषिणो ये गुरुप्रसादजनितज्ञानवन्तः । गुरुरहितानां तु गुहा गुहायां महापुरुषबुद्धौ त्रीणि पदानि निहितानि निलीनानि गुप्तानि नेङ्गयन्ति नात्मानं प्रकाशयन्ति नैव वा प्रकाशन्ते । तुरीयं भागं मनुष्या गुरुरहिताः प्रति-पादयन्ति । अयं भावः। तुरीयप्राज्ञतैजसविश्वाः प्रत्येकं मनसा चतुर्भागीकर-णीयाः । तानि गुरुमन्तः कार्त्स्न्येन विदन्ति गुरुराहिताः प्राज्ञा अपि भागत्रयं न विदन्त्येव। तेषां स तत्र चतुर्भागमात्रं प्रकाशतेऽतो गुरुमन्त एव वेदतात्पर्यज्ञाः । अन्यस्त्वाह । तुरीयं प्राज्ञतैजसान्यं चतुर्थं मनुष्या वदन्ति इति। अपर आह। परा पश्यन्ती मध्यमा वैखरीति। मनुष्याः वैखरीमेव वदन्तीति । नामाख्यातोपसर्गनि-पातेषु चतुर्थं भागं वदन्तीत्यपरे। एवं धर्मार्थकाममोक्षेष्वित्यन्ये। कल्पस्तु—

चत्वारि वाचो मिमते पदानि स्वाचार्यवन्तः खलु तानि विद्युः।
त्रीण्यत्र गुह्यानि गुरूदितानि तुर्यं हि भागं प्रवदन्ति मर्त्याः। इति॥

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।

एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥४६॥

ननु चत्वारि वाक् ( ऋ० १ । १६४ । ४५ ॥ ) इति पदार्थानां नानार्थत्व-मुक्तम् । तर्हि द्वैतापत्तिरित्याशंक्याह । एकैव देवता परमात्मा सर्वदेवता । एक-स्यैव नानानामग्रहणीत्युच्यते । यद्वा " त्रयः केशिनः " ( ऋ०१ । १६४ । ४४ ॥ ) इत्यत्र देवतात्रित्वमुक्तम् । तर्हीन्द्रादयो न काश्चिद्देवता इहेत्याशङ्क्याह । एकैव देवता परमात्मा सर्वदेवता । एकस्यैव नानानामग्रहणी त्रित्वोक्तिस्तु । नानादेवतानां त्रित्वसंख्यावरोधार्थं यज्ञादिप्रवृत्त्यर्थं तदुच्यते । इन्द्रं परेशमाहुः । " अहन्नहिं पर्वते शिश्रियाणम् " ( ऋ० १ । ३२ । २ ॥ ) इत्यादौ । मित्रं परेशमाहुः "मित्रो जनान्यातयति ब्रुवाणः" ( ऋ० ३ । ५९ । १ ॥ ) इत्यादौ । वरुणं परेशमाहुः । " शतं ते राजन्भिषज " ( ऋ० १ । २४ । ९ ॥ ) इत्यादौ । अग्निं परेशमाहुः "त्वमग्ने रुद्र" ( ऋ०२।१ । ६ ॥ ) इत्यादौ । अथो तथा दिव्यः सूर्यस्तं परेशमाहुः " चित्रं देवानाम् " ( ऋ० १ । ११५ । १ ॥ ) इत्यादौ । स परेशो गरुत्मान्सुपर्ण इत्याहुः ।

सौवर्णपक्षममितद्युतिमप्रमेयं छन्दोमयं विविधयज्ञतनुं वरेण्यम् ।

पक्षौ बृहच्च भवतो रथवच्च यस्य तं वैनतेयमजरं प्रणमामि नित्यम् ॥

इदानीमग्निं परेशमाहुः । अग्निशब्दोऽत्र नेत्राग्निमतो रुद्रस्य वाचकः । " स्थिरेभिरङ्गैः " ( ऋ० १ । ३३ । ८ ॥ ) अर्हन् बिभर्षि ( ऋ० २ । ३३ । १० ॥ ) इत्यादौ । यमं परेशमाहुः । " त्रिकद्रुकेभिः पतति " ( ऋ० १० । १४ । १६ ॥ ) इत्यादौ । मातरिश्वानं परेशमाहुः । " आत्मा देवानां भुवनस्य गर्भः ( १० । १६८। ४ ॥ ) इत्यादौ । इन्दतीति इन्द्रः । "इदि परमैश्वर्ये" । मितो हिंसायास्त्रायत इति मित्रः । एवं वृणुत इति वरुणः । अङ्गं नयतीत्यग्निः । "अगि गतौ" "णीञ् प्रापणे" इति । गत्यर्था ज्ञानार्थाः । दिवि महापुरुषबुद्धौ द्योतनवत्यां भवो दिव्यः । शोभनो मोक्षपक्षः सुपर्णः । संसारमोक्षाभ्यां गरुद्भ्यां गरुत्मान् । रोदयतीति रुद्रः । स एवाग्रणीत्वादग्निः । यमयतीति यमः । येन रुष्टेन मातरि मयायां क्षिप्तो जीवः श्वेव भवति स मातरिश्वा । एकं सद्ब्रह्म विप्रा ब्रह्मणत्वाद्यभिमानिनो यज्ञादिसि-द्धये बहुधाभिधानेनेन्द्रादिरूपेणाहुः । योजनान्तरे तु विप्रा मेधाविनस्तत्त्वविदस्तु इन्द्रादिरूपे बहुधा सद्ब्रह्म एकमाहुः । कल्पस्तु—

इन्द्रादिशब्दा गुणयोगतो वा व्युत्पत्तितो वाऽपि परेशमाहुः ।
विप्रास्तदेकं बहुधा वदन्ति प्राज्ञास्तु नानापि सदेकमाहुः ॥

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते ॥ ४७ ॥

ननु दुःखगाहज्ञानमार्गाद्भक्तिमार्ग एव ज्यायानित्याशङ्क्य पुनरावृत्तिदोषत्वेन ज्यायस्त्वमित्यभिप्रेत्य भक्तस्वरूपादिकमाह । कृष्णं विष्णुं सगुणं ब्रह्म । नियानं नियमेन भक्तैर्यातव्यम् । हरयः । सुपर्णं गरुडसमानजातिकमारूढाः । सुपर्णमारोहन्तीति । अपः, आप इत्यन्तरिक्षनाम ( निघ० १।३॥ ) अन्तरिक्षसमं सूक्ष्मवस्त्रं वसानाः परिदधानाः दिवं स्वर्गं ते उन्मुच्य त्यक्त्वा पतन्ति पृथिवीं प्राप्नुवन्ति । विष्णवो भूत्वा सारूप्यादिना समानतां प्राप्ताः सुपर्णाः । ते विष्ण्वादिलोकं प्राप्ता आ अववृत्रन् आवर्तन्ते । कुतः । तस्य ऋतस्य विष्ण्वादेः सगुणब्रह्मणः सदनाल्लोकात् आदिदेव आगमनसमकालमेव घृतेनोदकेन पृथिवी विशेषेण उद्यते आर्द्रीक्रियते । " उन्दी क्लेदने " परस्माल्लोकाद्भुवमागच्छन्ति । मेघीभूय उदकीभूय वृष्टिरूपेण भुवमार्द्रयित्वा ओषधिवनस्पत्यादिरूपं प्राप्य तद्रूपेण पुरुषं प्राप्य स्त्रियो जठराज्जायन्ते । तदुक्तं शिवधर्मोत्तरे—

वायुमेघाम्बुभूम्यन्तरेतोगर्भत्वमाश्रिताः ।
जायन्ते जठराज्जीवाः पतन्तः सर्वतो भुवि ॥

इति । कल्पस्तु ।

सारूप्यमुख्यां पदवीं प्रपद्य विष्ण्वादिलोकान् द्रुतमाश्रयन्ति ।
वाय्वम्बुदे ओषधिवीर्यगर्भभावं प्रपन्नाः पुनरुद्भवन्ति ॥ ४७ ॥

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।
तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चला चलासः ॥ ४८ ॥

जाताश्च कालेन संसारेण च व्याप्यन्त इति वक्तुं कालसंसारस्वरूपवर्णनेन कालचक्रं वर्णयन्ति । ननु "द्वादशारं नहि" इत्यत्र मन्त्रेऽप्येषोऽर्थोऽभिहितः । सत्यम् । तस्यैव विवृत्तिरियमधिकविवक्षया । द्वादश प्रधयः प्रधीयन्त इत्यरा मासात्मकास्तैरारब्धमेकं संवत्सरात्मकं कालचक्रं तस्य च त्रीणि नभ्यानि तिस्रो नाभयः । ऋतुद्वन्द्वेन नाभिः "षड्ऋतुः संवत्सरः" (श० ब्रा० १।२।५।१२॥) इति श्रुतेः । को ब्रह्मा को वा

पुरुषस्तत्कालचक्रं उ चिकेत जानाति । तस्मिन् कालचक्रे साकं सहभवा अन्योऽन्यानुबद्धास्त्रिशताः षष्टिश्चेत्येवं संख्याताः सूक्ष्मा अराः शङ्कवः कीला अर्पिताः । कीलका इव चक्रे निखताः । अनेन त्रिविधं भूतपञ्चकमित्युक्तम् । माससंवत्सरकर्तृरूपं कालचक्रे प्रवर्तकत्वात्तदात्मकमित्युक्तम् । अधिभूतमेतद्भवति । न चलाचलासः न चला अव्यभिचारिणः "चरिचलिपाति" (३।१।१३६॥) अभ्यसान्ते दीर्घः। एवमधिभूतं सूर्यचक्रम् । अधिदैवं मासा एव प्रधयः । संवत्सरश्चक्रम् । ऋतवो नाभयः। षष्ट्यधिकं त्रिशतं सूक्ष्मा अरास्तु दिवसा रात्रयो वा । तत्संधयः पूर्वे वा परे वा । अध्यात्मं तु । प्रधीयन्ते प्रधानानि स्वीक्रियन्त इति प्रधयो मनो बुद्धिसहितानीन्द्रियाणि द्वादशारस्थानानि। तैरारब्धं चक्रं प्राणान्तःकरणात्मकमेकं लिङ्गशरीरं सर्वयोनिषु भेदाभावादेकांशस्य चक्रसदृशत्वाच्चक्रम् । तस्य तिस्रो नाभयोऽवस्थाः । अवस्थात्रयः । स्वप्ना इत्युक्ताः । न चैतच्चक्रं भ्रमणादुपरमतीत्याह । क उ तद् ब्रह्म चिकेत वेत्ति क एव पुमान् । न च ब्रह्मज्ञानादृते तन्निवृत्तिः । ब्रह्मज्ञानं तु दुर्लभम् । तस्मिंल्लिङ्गशरीरे आश्रितं साकं सहभावि स्थूलशरीरम् । तत्र च स्थूलदेहे त्रीणिशतानि षष्टिश्च शंकव इव स्थिताः अरा अस्थिरूपा अर्पिता अन्तर्निहिताः आधारस्तम्भसमानाः । तेन चञ्चला न । अतिदृढाः । अन्ये तु त्रिशतं षष्टिर्मज्ञान इत्याहुः । परे अस्थिसंधय इत्याहुः । "प्राणो वंश" ( ऐ० आ० ६।२।१॥) "अथ कौण्ठरव्यः"(ऐ०आ०३।२।२॥)इत्येताभ्यामधिदैवाध्यात्मविषयाभ्यामुपासनापराभ्यां खण्डाभ्यामयमर्थ उक्तः सूचितः। अत्राप्युपासना विवक्षितेति अस्मज्ज्येष्ठभ्रातरो लक्ष्मीधराचार्या उक्तवन्तः। कल्पस्तु ।

मासोदितारैर्हित उक्तसंख्यैश्चक्रं त्रिनाभं त्रिशतत्रयं च ।
षष्टिस्तु सूक्ष्मा अरका अचाल्याश्चक्रं रवेरधिभूतमिदं वदन्ति ॥
अधिदैवं त्वरामासास्तनुश्चक्रं तु वत्सरः ।
त्रिनाभिरत्रारा सूक्ष्मा दिवसा सन्धयो निशाः ॥

इदमाधिदैवते । अध्यात्मं तु—

बुद्धिर्मनः खनि अरा द्विषट् च
चक्रं च लिङ्गं त्रिपुराव्यावस्थाः ।
तत्र स्थितस्थूलशरीरभाजो
ह्यस्थ्यादयोऽरा अणवः प्रसंख्याः ॥ इति ॥

यस्ते॒ स्तन॑ः शश॒यो यो म॑यो॒भूर्येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि ।
यो र॑त्न॒धा व॑सु॒विद्यः॑ सु॒दत्रः॒ सर॑स्वति॒ तमि॒ह धात॑वे कः ॥४९॥

एवंविधकालचक्रसंसारचक्रनिवृत्तिर्महावाक्यादेवेति वदन् सरस्वतीं पुरस्कृत्य किंचिद्विशेषमाह । त्रिविधा हि सरस्वती पावका न इति तृचोक्ता। तत्र वाग्रूपिणी देवतारूपिणी नदीरूपिणी च क्रमादुक्ता । अत्र देवतारूपिणी कथ्यते ।

भो वाग्रूपिणि सरस्वति वेदविद्ये ! तव स्तनः कुचोऽमृतस्रावकः "स्तन घनशब्दे" शब्दात्मकः। शशयः। शीङोऽचि, छान्दसं द्विर्वचनम्। शयान अविद्यान्तो जीवः। तत्प्रधानवाच्यमपि लक्षणया शशय इत्युच्यते । यत्र परमात्मानुशवेन प्रत्यगात्मैवोच्यते तद्वाक्यं सरस्वत्याः स्तनस्थानीयम्। तं स्तनं धातवे "डुधाञ् धारणपोषणयोः" अस्मत्पोषणाय कः कुरु संपादय इह जीवात्मनि देशे काले च। तथा यश्च। द्वितीयः स्तनः मयोभूः सुखरूपः परमात्मा तत्प्रधानं वाक्यमपि लक्षणया मयोभूः। यत्र जीवात्मानुवादेन परमात्मा उच्यते तद्वाक्यं देवरूपं सरस्वत्या द्वितीयस्तनस्थानीयम्। तं स्तनं धावते अस्मत्पोषणाय संपादय।

अथ नदी रूपिणी सरस्वती।भो नदीरूपिणि सरस्वति ते तव सम्बन्धिना स्तनेन अमृतस्रावकेन येन विश्वानि सर्वाणि वारिभवानि व्रीह्यादिधान्यादीनि पोषयसि स प्रवाहो बहिर्निपातितः क्षेत्राणि। प्राणिधान्याद्युत्पत्तिहेतुः स प्रवाहो नदीरूपः सरस्वत्या स्तनस्थानीयस्तं स्तनं धातवे धातुं ममात्मानं पालयितुं कुरु सम्पादय। 'धाञ्' तुमर्थे तवे प्रत्ययः । एवं सरस्वत्युदकसाध्यसस्यादिसमृद्धिर्याचिता। तथा यश्च द्वितीयस्तनः रत्नधाः रत्नानामुत्पादकः पालकश्च यः सरस्वत्याः प्रवाहविशेषः समुद्रप्रविष्टः समुद्रोदकेन संसृज्यमानस्तवज्जलं प्राप्य प्रसृतः। शशयो वेदगुहाशयः। तद्गम्यफलभूत इति यावत्। मयोभूरत्नप्रभवः। मय इत्यन्न नाम † सर्वप्राणिभृदिति यावत्। येन विश्वा सर्वाणि वार्याणि वरणीयानि व्रह्मादीनि पुष्यसि पालयसि। यो रत्नानि जनयति तं ते तव स्तनं धातवे संपदाय।

तदुक्तं रत्नशास्त्रे ।

समुद्राधस्तलं प्राप्य सरस्वत्या जलं शुभम् ।
जनयित्वाथ रत्नानि वर्त्तयत्यपि तं परम् ॥
रत्नमुत्पाद्यते भोक्तृभोग्यादीशवरादपि ।
सरस्वतीनदीसङ्गादधिरत्नाकरं विदुः ॥ इति ॥

---

† निघण्टौ 'मय' इत्यन्ननामसु न पठ्यते।

अनेन रत्नसमृद्धिः प्रार्थिता। क्षुत्पिपासादिदोषनिवृत्तौ रत्नादिना ऽश्रीकत्वादिदोषनिवृत्तौ च नैश्चित्ये ज्ञानप्रवृत्तिः सुकरेत्युभयं प्रार्थ्यते।

तथा च भो देवतारूपिणि सर्वदेवमयि सरस्वति प्रसीद । वसुवित्, वसु वसनाच्छादनकर्त्तारौ जीवेश्वरौ वेदयति ज्ञापयति । अन्तर्भावितोऽत्र ण्यर्थः। विदितब्रह्मविद्याचार्यो हि देवतारूपिण्याः सर्वदेवतारूपायाः सरस्वत्याः स्तनस्थानीयः कः। परमानन्दरूपः। भोः सरस्वति तं तव स्तनमिह धातवे संपादय। तथा यस्ते द्वितीयः स्तनः सुदत्रो धर्माधर्मापेक्षया फलदाता ईश्वरः सोऽपि देवतारूपिण्याः सर्वदेवतामय्याः सरस्वत्या स्तनस्थानीयः। भो सरस्वति तं स्तनमिह धातवे सम्पादय। सुदत्र इत्यत्र 'दद दाने' अतः सुपूर्वात्क्विप् । सुखं ददातीति सुदत् धर्मः धर्मवान्। मतुपोऽलुक्। सुदतस्त्रायत इति सुदत्र ईश्वरः। पूर्वपदप्रकृतिस्वरः । कथं तर्हि सुधर्मेण त्रायत इति। "सुपिस्थः" ( ३ । २ । ४ ॥ ) इत्यत्र सुपीति योगविभागम्। " तत्पुरुषे तुल्यार्थ " ( ६ । २ । २ ॥ ) इति पूर्वपदप्रकृतिस्वरः ।

कल्पस्तु ।

यस्ते स्तनो वाणि सरस्वतीशजीवात्मबोधश्श्रुतिवाग्विशेषः ।
जीवेशबोधात्सुकुचो द्वितीयो द्वयं तदेतत्कुरू नोऽवनाय ॥

तथा ।

यस्ते स्तनस्तीर्थ सरस्वति त्वदः सोमप्रदो धान्यतृणादिहेतुः ।
यश्चाब्धिगो रत्नसमृद्धये ऽन्यो द्वयं तदेतत् कुरु नो ऽवनाय ॥
यस्ते स्तनो देवि सरस्वति त्वदंशो गुरुश्चेत्स इह द्वितीयः ।
प्रोक्तः स्तनः सर्वसुखात्मकत्वं द्वयं तदेतत्कुरु नोऽवनाय ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥५०॥

अथ ब्रह्मविद्यान्तर्भूतावान्तरविद्यानां फलोक्तिः। यस्ते सरस्वत्यै यज्ञेन साध्येभ्यः सकामेभ्यः । उपलक्षणमिदम् । निष्कामेभ्यो ब्रह्मलोकार्थिभ्यश्च एवमेतदृक्प्रतिपादनायेत्यनुक्रमणिकार्थः। यज्ञेन काम्यकर्मणा यष्टव्यमीश्वरं यजन्ति ते देवा भवन्ति। स्वर्गे देदीप्यमानाः । अथ निष्कामफलोक्तिः । तानि निष्कामत्वेनात्यन्तोत्कृष्टानि। यच्छब्दरहितस्तच्छब्दोऽत्यन्तोत्कृष्टवाची । धर्माणि धर्मसाधनानि यज्ञादीनि ज्ञानस्य यज्ञस्य प्रथमानि पूर्वसाधनानि आसन्भवन्ति । ब्रह्मविद्यापि

द्विधा सगुणा निर्गुणा च । अत्र निर्गुणायाः फलमिदम् । ते अत्यन्तोत्कृष्टा इह एव नाकं सुखम् । अकं दुःखम् । अत्र द्वौ नञावतिशायिनं प्रकृतमर्थमाहुरिति । नाकमानन्दरूपम् " नभ्राण्नपान्नवेदा " ( ६।३।७५॥ ) इति निपातनात्साधुत्वम् । महिमानो महान्तः 'उपादिष्टमहावाक्यो महच्छब्दे कथ्यते' इति वचनादुपदिष्टमहावाक्याज्जीवन्मुक्ताः सन्तः सचन्तस्तेषां समवाये समवयन्ति । परमानन्दात्मका भवन्तीत्यर्थः । अगुणब्रह्मविद्याफलम् । यत्र ब्रह्मलोके पूर्वे ब्रह्मादयः सन्ति तत्र साध्या आध्यात्मसगुणध्यानेन सह वर्तमानाः सगुणब्रह्मज्ञाः सन्ति भवन्त्यपुनरावृत्ताः ।

कल्पस्तु ।

काम्येन धर्मेण सुरादिलोको ज्ञानस्य निष्कामकृतिर्हि हेतुः ।
वाक्योपादिष्टाः स्युरिहैव मुक्ता ब्रह्मादिलोकः सगुणेशबुध्या ॥ इति

समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥५१॥

ननु काम्यकर्मसगुणब्रह्मविद्ययोर्देशांतरप्राप्तिलक्षणफलमुक्तं तन्न । "तत्सृष्ट्वा तदेवानुप्राविशत्"(तै०उ०२।६॥) इत्यधिकृत्य तस्यैव ब्रह्मणः प्रवेशश्रवणाद् ब्रह्मात्मकस्य सर्वगतस्य निष्क्रयस्य जीवस्य मर्त्यत्वसम्भवात् । इत्याशङ्क्योपाधिवशाद्गति संभव इत्याह । समानं देशकालादौ समानमप्युदकमुदकाद्दुःखादुद्गतमप्येतद् ब्रह्म अहभिरहीयमानैर्धर्माधर्मसंस्कारैरिन्द्रियैः प्राणैश्चोपहितं जीवभूतं सदुदेति देवतादित्वमनुभवति । अव च नीचैरपि मर्त्यं मनुष्यादिरूपमनुभवति च । एवमनुभाव्य जीवो यदा मनुष्यतां प्राप्तस्तदा कर्माधिकारी जगद्यात्रां प्रवर्तयेत । अन्यथा जगदुजननदोषः स्यादित्याह । भूमिं मनुष्यादिसहितां पर्जन्या हविषा जुष्टा इन्द्रसूर्यादयश्च ये देवास्ते जिन्वन्ति प्रीणयन्ति वृष्ट्यादिना दिवं देवादिसहितं द्युलोकं जिन्वन्ति प्रीणयन्ति । यजमानेन भूस्थेन समर्चिता । भूस्था अग्न्यादयो हविर्दानेन स्वर्गस्थान् देवांस्तर्पयन्तीत्यर्थः । तदुक्तं भगवद्गीतायाम् । सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ( गीता ३ । १०॥ ) इत्यारभ्य ' स मोघं पार्थ जीवति ' ( गीता ३ । १६ ॥ ) इत्यन्तेन ग्रन्थेन । कल्पस्तु—

धर्मैरधर्मैरथवा सनाभिर्लिङ्गस्थजीवः स्वरुदेत्यपैति ।
भूस्थाः सुरानारमयन्ति देवाः भूस्थान् सुरा आरमयन्ति वृष्ट्या ॥

दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् ।

अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥५२॥

अत्र सूक्तार्थोपसंहारः। दिवि भवं दिव्यं स्वर्गिणं कर्मफलभोक्तारं सुपर्णं सुपर्णमारोहयतीति । णिजचौ । सुपर्णवाहनादिरूढविष्ण्वादिलोकार्थं सगुणोपासकं स्वर्गिणं च कर्मविद्याभ्यां भ्रष्टम, नीच कर्मकरणेन च वायसयोनिं प्राप्तं तथा बृहन्तं ब्रह्मरूपिणमात्मानं च तथा अपां गर्भम् अप्प्रमुखसूक्ष्मभूतेन्द्रियाणामापगानां गर्भं कार्यं लिङ्गदेहिनं दर्शनं ज्ञानं च ओषधय इमाः स्वामिन्यः पोषका यस्यास्तां स्थूलां तनुं च। अभीयतः सर्वतः आपो यत्र गछन्ति स अभीयः समुद्रान्तःस्थितभूप्रदेशः। "ऋक्पूरब्धूः पथामानक्षे" (५।४।७४॥) इत्थं च समासान्तः। "द्व्यन्तरुपसर्गेभ्योऽप ईत्" (६।३।९७॥)। सभीय इवाचरन्तीति क्विप्। संसाराधित्वादभीय इवाचरतोऽप्यतिसंसारिणो जीवान् ज्ञानामृतरसवृष्टिभिस्तर्पयन्ति। सरस्वन्तम।

"अम्भो वाणी च तापी च ज्ञानं च सर उच्यते"।

इति भोजनिघण्टुः। ज्ञानवन्तं गुरुं चावसे रक्षणाय जोहवीमि प्रोक्तवानस्मि। ह्वयतेर्यङ्लुकि "ह्वः संप्रसारणम्" (६।१।३२॥)। "यङो वा" (७।३।९४॥) इतीट्। दिव्यादयोऽत्र सूक्ते मयोक्ता इत्यर्थः।

इन्द्रं मित्रमित्यनयोरस्य च मन्त्रस्य सौरत्वं रात्र्यध्ययननिवृत्त्यर्थम। सूर्यस्य परमात्मत्वे सर्वमन्त्रावरोधश्च। परमार्थतः सौरत्वे सूर्यलिङ्गादर्शन हेतुर्वाच्यः। ऋग्भाष्यादौ नैवं व्याख्यातमिति चेन्न। यत्र ऋचो व्याक्रियन्ते तस्यैव ऋगभाष्यत्वात्। स्कन्दोद्गीथभाष्याणामपि भिन्नार्थता दृष्टा। स्वामिना त्वन्यथैव व्याख्यातम। शाकपूणियास्कादिनिरुक्तेष्वपि व्याख्याभेद एव। तदुक्तं नारदीयपुराणे ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥
वेदानामर्थनानात्वप्रतीतावपि सन्मतिः ।
मुनिवाक्यानुरोधेन व्याख्यां कुर्वन्न दुष्यति ॥

अधियज्ञविषयं स्कन्दादिभाष्यम। निरुक्तमधिदैवताविषयम। इदन्तु भाष्यमध्यात्मविषयमिति। न च भिन्नविषयाणं विरोधः। अस्य भाष्यस्य मूलं विष्णुधर्मोत्तरे यत्र पुष्करनामा यक्षः श्रीरामं प्रति सर्वधर्मानुक्तवांस्तत्र तत्र च ऋग्विधानं यजुर्विधानं सामविधानं अथर्वविधानं चोक्तवान्पुष्करः। तत्र च काति-

पयानां सूक्तानां संघातः कल्पश्लोकः। तत्राप्यस्यवामीयकल्पो महान् । अध्यात्मविषयत्वात् । तथा च प्रतिमन्त्रमर्थतो व्याख्यानं तत्र सूचितम् । वृद्धपराशरेणोक्तम् ।

हविष्पान्तं पौरुषञ्च नतमाह इतीति च ।
अस्यावामीयकं जप्त्वा महद्देनो व्यपोहति ॥
अस्यवामीयसूक्तञ्च ब्रह्महा शुचये जपेत् ।
विचारयेत्तदर्थं चेज्जीवन्मुक्तो न संशयः ॥

कल्पस्तु—

स्वर्गी विष्णवादिलोकी दुरिजनजनिर्ब्रह्मभूतोऽपि लिङ्गं
ज्ञानं स्थूलाख्यदेहो नवजलधिगतो वारिकोशोपमोऽसौ ।
एतेऽप्यन्ये पदार्था मुनिवरकथिता अस्यवामीयसूक्ते
संसाराद्रक्षणाय श्रुतिपठितवतस्तारयेयुर्भवाब्धिम् ॥

अत्र वृद्धशौनकः ।

उचथ्यदीर्घतमसौ जप्येते स्वाद्यनुत्तये ।
ब्रह्मवर्चसी तेजस्वी दिव्यधीर्दुःसहो मुनिः ॥
अङ्गिरा ब्राह्मणस्तस्मादुचथ्यो ममतापतिः ।
तस्मादधीतवेदादीननुज्ञातो बृहस्पतिः ॥
रिरंसुर्ममतां तां नो लेभे गुरुसुरक्षिताम् ।
उचथ्यः कारयन्यज्ञं जगाम प्रियवर्मणः ॥
लब्धावकाशस्तां रन्तुमारेभेऽथ बृहस्पतिः ।
हृत्कोणोदरसंस्थोऽपि मुनीशः क्षितिमाप स ॥
रेतो यतोऽत्र संकीर्णं निन्दितो गुरुरब्रवीत् ।
जात्यन्धो भव दुष्ट त्वमित्युक्त्वा तपसे गतः ।
पिता ददौ वरं तस्मै ज्ञानचक्षुः शुचिर्भव ।
अथोपनीतमात्रोऽर्थं चक्रे दीर्घतमा दिवा ॥
स्त्रीगंधधायको यक्ष्मदायकोनिष्टयोषिति ।
एवमादि दिवाजातं रात्रौ हरति सूक्ततः ॥
उद्विग्नै र्मुनिभिः सोऽथ मञ्जूषायां प्रवेशितः ।
मञ्जूषायां विपाशियां क्षिप्त्वा नद्यां प्रवाहितः ॥

प्रतिक्षिप्तास्ततोऽङ्गेन गृहीता स्यान्नृपेण सा ।
तं दीर्घतमसं ज्ञात्वा दत्ता भार्याथ च स्वयम् ॥
अजीजनत्सुतानस्य दास्यामुशिजि चात्मने ।
पुत्रमुत्पाद्य कक्षीवत्संज्ञं गोधर्ममाचरत् ॥
ततो दीर्घतमा वृद्धगोतमो गौतमस्ततः ।
गौतमेषु तदारभ्य सूक्तार्थः स्फुरति स्फुटम् ॥
तत्कुले विश्रुतो विष्णुस्ततो विष्णुप्रकाशकः ।
आत्मानन्दस्तदुत्पन्नस्तेनेदं भाष्यमीरितम् ॥
तदेतद्भाष्यकूपार्थपुण्यौघनिचयेन सः ।
प्रीयतां सुकृती स्वामी सहजानन्दकेशवः ॥
नमो विष्णुप्रकाशाय केशवाय गरीयसे ।
रामाय पुष्करायाथाप्यौचथ्यायौशिजाय च ॥ इति ॥

इति श्रीमदात्मानन्दविरचितं वामीयसूक्तभाष्यं समाप्तम् ।

